जीर्यति—जृपु क्रुटपु व० दि०। जृणाति जॄ वयोहानौ [क्र्या०]। जूर्यते—जूरी जूर्णे दि०। जिनाति—ज्या वयो० क्र्या०। जरति—जॄ अभिभवे-भ्वा०। जारयति—जॄ वयो० चु० ॥८॥

ग्राथयति—ग्रन्थ बन्धने चु०। वा इन्। ग्रथति—[स एव]। ग्रन्थयति—ग्रन्थ सन्दर्भे चु०। इन् वा। ग्रन्थति—[स एव]। ग्रथ्नाति—ग्रन्थ स० क्र्या०। ग्रन्थते—ग्रथि वकि कौ० भू०। तृप्यति—तृप प्रीणने दि०। तृप्नोति—तृप प्रीणने स्वा०। तर्पयति—तृप प्रीणने चु०। इन् वा। तर्पति—[स एव]। ॥९॥

मृष[य]ति—मृष तितिक्षा० चु०। मृषति—(स एव)। मृष्यति—शक मृष क्ष०(दि०)। मर्षयति—मृष तिति० चु०। यजादिपाठ आत्मने। मर्षति—वा इन् मर्षते ॥१०॥

व्रीणाति—व्री वरणे क्र्या०। वृणीते—वृङ् सभक्तौ क्र्यादि। वृणाति—वॄ वरणे क्र्या०। वरति—वर ईप्सायां भ्वा०। वरयति वा। वृणोति—वृञ् वरणे स्वा०। वरति—वृञ् आवरणे भू०। व्रीयते—व्री वरणे दि०। वारयति—चु०। वरते—वृञ् वरणे भ्वा० ॥११॥

निष्कडति—कड मदे तु०। कलते—कल सख्याने भू०। कालयति—कल विल डिप चु०। कलयति—कल गतौ चु० ॥१२॥

श्राति—श्रा पाके अ०। श्रायति—श्रै पाके भू०। श्रीणाति—श्रीङ् पाके क्र्या० ॥१३॥

इर्ते—ईर गतौ अ०। इयर्ति- ऋ सृ गतौ अ०। प्रेरति—ई क्षेपे भू०। प्रेरयति—स एव। प्रेलति- इल प्रेरणे वा। प्रेलयति—[स एव]॥१४॥

स्फुटति—स्फुट विकसने तु०। स्फोटते—स्फुट विकसने भू०। स्फोटति—स्फुटि रु विशरणे भू०। स्फोटयति—चट स्फुट भेदे चु० ॥ १५ ॥

शोभते—द्युत शुभ रुच दीप्तौ भू०। शुभति—शुभ शुम्भ शोभार्थे तु०। शुम्नोति—शुभ शुम्भ० स्वा०। निशुम्नोति—शुभ भाषणे स्वा० ॥१६॥

धरति—धृञ् धारणे उभय० भ्वा०। धारयति—[स एव]। धीयते—धीङ् अनादरे दि०। धियति—धि धारणे तु०। ध्रियते—धृङ् अनवस्थाने तु० ॥ १७ ॥

शेषति—कष शिष भू०। विशिनष्टि—शिष्लृ विशे० रु०। शेषयति—शिष असर्वोपकरणे चु०। शेषति—स एव ॥१८॥

वस्ते—वस् आच्छादने अ० । निवासयति—वस स्नेहच्छेदापहरणेषु चु० । वासयति—स एव । उपवासयति—[स एव धातु ।] निर्वासयति—स एव धातु । निवसति—वस आच्छादने भ्वा० ।।१९।।

इच्छति—इषु इच्छायां तु० । अन्वेषते—एषृ हेषृ गतौ भ्वा० । प्रेषते—इष गतिहिंसा० भ्वा० । इष्णाति—इष आभीक्ष्ण्ये क्र्या० । अन्विष्यति—इष गतौ दि० ।।२०।।

शिनोति—शिञ् निशामने स्वा० । निशीशासते—शानष् तेजने भ्वा० । निश्यति—शो तनूक० दि० । निशणति—वन षण सं० भ्वा० । निशानयति—शान तेजने चु० ।।२१।।

प्रमिणोति—डु मिञ् प्रक्षेपणे स्वा० । मीनाति—मीञ् हिं० क्र्या० । प्रमीयते—मीङ् हिंसायां दि० । मयते—मेङ् प्रतिदाने भ्वा० ।। २२ ।।

आज्ञापयति—ज्ञा अवबोधने भ्वा० (चु०) । संज्ञपयति—स एव । उपज्ञपयति—स एव । ज्ञपयति—स०।। २३ ।।

उद्घाते—घा चलने भ्वा० । संघातयति—स० चु० । विघाटयति—घट संघाते चु० । घटते—घट चेष्टायां भ्वा० ।।२४।।

तुडति—तुड तोडने तु० । तोडति—तुड तोडने भ्वा० । तोडयति—तुड तोडने चु० ।।२५।।

कुरति—कुर शब्दे तु० । गुञ्जति—गुञ शब्दे तु० । कुनाति—कुङ् शब्दे क्र्या० । क्नूयते—क्नूयी शब्दे भ्वा० ।। २६ ।।

भावयते—भू प्राप्तावात्मनेपदी चु० । भवते—स एव । भावयति—भू इत्य अव कल्कने चु० । भाविर्भवति—भू [स]त्ता० भ्वा० ।। २७ ।।

क्षुभ्यति—क्षुभ शुद्धौ भ्वा० । शुन्धयति—शुन्ध शुद्धौ चु० । शुन्धते—विकल्पेनन्त । शुष्यति—शुष शो० दि० ।। २८ ।।

तापयति—तप दाहे चु० । तपति—तप धूप सं० भ्वा० । वितपति(ते)—[उ]त्-विद्भ्यां तप आ० । तप्यते—तपसीव कर्म० [दि०] ।। २९ ।।

भनिर्गचयति—ग्चि वियोजनसंपचनयो । विकल्पेन । छिनत्ति—छिदि सद्वि० रु० । छ्यति—छो छेदी० चु० ।। ३० ।।

उड्डीयते—डीङ् गतौ दि० । उड्डयते—डीङ् विहाय० भ्वा० ।। ३१ ।।

ददाति—दुदाञ् डुधाञ् धा० भू० । संधयति—ट्धे पा पाने भू० ॥ ३२ ॥
स्निह्यति—स्निह प्रीतौ दि० । स्नेहयति—स्निह स्नेहने चु० ॥३३॥
आलिङ्गति—उख लिङ्गि० भू० । लिङ्गयति—लिङ्ग विचित्री० चु० ॥ ३४ ॥
घोषति—घुषिरु शब्दे भू० । घोषयति—घुषिरु विशब्दे चु० ॥ ३५ ॥
व्याघोटते—घुट परिवर्तने भू० । व्याघुटति—घुट प्रतिघाते तु० ॥ ३६ ॥
व्याहोडते—होडृ अनादरे भू० । व्याहोडति—हुडृ हूडृ गतौ भू० ॥३७ ॥
श्रन्थते—श्रन्थ शैथिल्ये भू० । श्रथयते—स० [ चु० ] ॥ ३८ ॥

भाजयति—पट पुटेत्यादौ भज भाषार्था चु० । सविभजति—भज श्रिञ् सेवायां भू० ॥३९॥

मन्दते—मदि स्तु० भू० । मन्दायते—मन्दाय कण्ड्वा० ॥ ४० ॥
उद्विजते—उद्विजी० तु० । उद्विनक्ति—उद्विजी० रु० ॥ ४१ ॥
क्षिप्यति—क्षिप प्रेर० चु० ( दि० ) । क्षिपति—क्षिप प्रे० तु० ॥ ४२ ॥
क्रीडति—क्रीडृ विहारे भू० । किलति—किल सै(शै)त्यक्रीडनयो' तु० ॥४३॥
चेतति—चिती स० भू० । चेतयते—चित सवेदने चु० ॥ ४४ ॥
लुभ्यति—लुभ गार्ध्ये दि० । लुभति—लुभ विमोहने तु० ॥ ४५ ॥
भर्जते—भृजी भर्जने भू० । भृज्जति—भ्रस्ज पाके तु० ॥ ४६ ॥

क्षाम्यति च । वृहिरे बाधति त्यक्षध्वम्—इत्यादि क्रिया अशुद्धा । स्फायन् वलन् सूत्रवलात् शुद्धा ।

आसेतिवादिका जह्यादिति असभ्या इत्यादि क्रियापदानि दुष्टानि ।

इत्थं काव्यक्रिया ज्ञात्वा नानाग्रन्थेषु दर्शिताम् ।
काव्य कुर्वीत मेधावी विनयस्तस्य कार्मणम् ॥ ९८ ॥

इत्याचार्यश्री**विनयचन्द्र**लिखिताया **काव्यशिक्षायां**
**विनयाङ्कायां क्रियानिर्णयो** नाम द्वितीय परिच्छेद ॥

---

# ३ लोककौशल्यपरिच्छेद ।

लोकव्यवहारकौशल्यात् काव्यम् । तद्यथा—

एकः—परमात्मा ।

द्वौ सूर्याचन्द्रमसौ, शब्दार्थौ, लोचने, अश्विनीकुमारौ, भुजौ, नयविनयौ, आचार-विचारौ, शुक्लवारप्रतिपदौ, द्वितियाशशधरौ, मङ्गलार्थे, रविमन्दौ क्रूरार्थे ।

त्रीणि भुवनानि । त्रिधा भूमिः—उच्चा, नीचा, समा । त्रयः पुरुषाः—उत्तम-मध्यमाधमभेदैः । त्रयः पुरुषार्थाः—धर्मार्थ-कामाः, पदार्थाः—जीव-धातु-मूलानि ।

> शरीरं बहिरात्मास्मदन्तरात्मा सदीश्वरः ।
> अशरीरी क्षीणकर्मा परमात्मा निराकृतिः ॥१॥

त्रिविधो दूतः—निसृष्टार्थो मितार्थः शासनहरश्चेति, वेदाः, अग्नयः, गुणाः—माधुर्य-ओजः-प्रसादाः, रत्नानि—ज्ञान-दर्शन-चारित्ररूपाणि, गुणाः—सत्त्व-रजस्तमोलक्षणा वा, रीतयः—वैदर्भी-गौडी-पाञ्चालीयाः, दण्डाः—मनो-वाक्कायाः, नाड्यः—इडा-पिङ्गला-सुषुम्णालक्षणाः, उपसर्गाः—दैवा मानुषाः पशुभवाः, ध्यान-धे(ध्ये)य-धारणाः, दुर्गाणि—जल-पर्वत-वनभवानि[1] । तिस्रः शक्तयः—प्रभूत्साह-मन्त्रलक्षणाः, उदयाः—गो-भू-हिरण्यलक्षणाः । त्रयो देवाः—ब्रह्माद्याः ।

> शब्दानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिस्वरा-
> त्रैलोक्यं त्रिपदी त्रिपुष्करमथ त्रिब्रह्म वर्णास्त्रयः ।
> यत् किञ्चिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गात्मकं
> तत् सर्वं त्रिपुरेति नाम भगवत्यन्वेति ते तत्त्वतः ॥२॥

चत्वारः—पुरुषार्था धर्माद्याः, वृत्तयो—भारती-सात्त्वती-कौशिकी-आरभटी-लक्षणाः, कषायाः—क्रोध-मान-माया-लोभाः, ध्यानानि—पिण्डस्थ-पदस्थ-रूपस्थ-रूपातीतानि आर्त-रौद्र-धर्म-शुक्लानि वा । चतस्रो राजविद्याः—आन्वेक्षकी( आन्वीक्षिकी )-त्रयी-वार्ता-दण्डनीतयः, उपायाः—साम-दाम-भेद-दण्डाः । चत्वारो नायकाः—धीरोदात्त-धीरललित-धीरोद्धत-धीरप्रशान्ताः । नायको दक्षिणोऽनुकूलो धृ(धृ)ष्टः शठश्चेति । सौख्यकरणानि—अभ्यास-अभिमान-संप्रत्यय-विषयकरणानि । चतुर्विधः प्रमोदः—भावसंस्कार-काव्य-प्रज्ञा तत्त्वनिश्चयैः । बुद्धयः—स्वभावजा औत्पत्तिकी कर्मजा

१ केचाभिन्नमत वैमन(यि)की गति ।

पारिणामिकी चेति । चत्वारोऽभिनया'—आङ्गिकवाचिक-आहार्य-सात्त्विकभेदै' । चत्वारि मेरुवनानि—भद्रशालादीनि । सज्ञा'—आहारभय-परिग्रह-मैथुनलक्षणा' । विकथा'—स्त्री-भक्त-देश-राजकथाभि । वर्गा—द्विजाद्या । गजाश्व भद्र-मन्द-मृग-सकीर्णा । दिश पूर्वाद्या' । चत्वारि वादित्राणि, तद्यथा—

ततं वीणाप्रभृतिकं तालप्रभृतिकं घनम् ।
वशादिकं तु शुषिरमानद्धं मुरजादिकम् ॥ ३ ॥

[ अभिधानचिन्तामणि, २८६–८७ ]

**पञ्च**—इन्द्रयाणि प्रसिद्धानि । समितय.- ईर्याद्या' । पाण्डित्यम्—वक्तृत्वमागामित्वं शास्त्रसंस्कारजं प्रौढित्व सारस्वतप्रमाण चेति । चरितम्—दान-मान-ज्ञान-वीरविलासा धर्माचारप्रख्यापन चेति । राज्यपालनम्—भूमि-राज्य-प्रजा-धर्म-शरीरपालनै । उत्सव—धर्म-द्रव्य-काम-विद्या-मोक्षमहोत्सवै । शरीराणि—औदारिक-वैक्रिय-आहारक-कार्मण-तैजसानि । पञ्च वक्त्राणि—हरस्य । कामबाणा—शोषण-तापन-दीपन-मोहन-उन्मादै । पञ्च बुद्धीन्द्रियाणि—श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणमिति । पञ्च कर्मेन्द्रियाणि—वाक्-पाणि-पाद-पायूपस्थानि । पञ्चधा व्याकरणम्—सूत्र-आदि-उणादि-परिभाषा-लिङ्गानुशासनलक्षणम् । परिचय—प्रसादीकृतदर्शनावर्जनेन १, सभाषणेन २, माधुर्यचर्यया ३, सविकारस्तुतिवचनै ४, कथितोपचारप्रयोजनैश्च ५ । मन्त्र—कर्मणामारम्भोपाय पुरुषद्रव्यसपद् विनिपातप्रतीकार कार्यसिद्धिश्चेति । पञ्चधा पापी—ब्रह्म-स्त्री भ्रूण-गो—मुनिहत्याभेदात् ।

**षड्विधं** दर्शनम्, तद्यथा—

जैन बौद्ध तथा साख्यं मीमांसं च तथा परम् ।
शिव लोकायित चेति षडेते दृष्टयो मता ॥ ४ ॥

द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायलक्षणा षट् पदार्था । प्रमाणानि—प्रत्यक्ष-परोक्ष-अनुमान-शब्द-अर्थापत्ति-आप्तवचनै । षड् लेश्या—कृष्ण-नील-कापोत-तेज-पद्म-शुक्लाभिधानै । षड्विध भाषालक्षणम्—सस्कृत-प्राकृत-अपभ्रंश-पैशाचिक-मागध-शूरसेनाभि' । षड् जीवनिकाया—पृथ्वी-अप्-तेजो-वायु-वनस्पति-त्रसभेदै । [षड्] ऋतव—वसन्त-ग्रीष्म-वर्षा-शरद्-हेमन्त-शिशिरभेदै । षड्विधा लक्षणा, तद्यथा—'रूढिलक्षणा यथा—कुशल, द्विरेफ, द्विक इति । (२) प्रयोजनलक्षणा यथा—गङ्गाया घोषोऽत्रापरिमितशैत्यपावनत्वादयो धर्मा व्यङ्ग्या । (३) उपादानलक्षणा यथा—मञ्चा क्रोशन्ति ।

(४) लक्षणलक्षणा यथा—कुन्ता प्रविशन्ति । (५) शुद्धलक्षणा यथा—गौर्वाहीक । केषाञ्चिन्मते सारोपेति नामा (६) साध्यवसानिका यथा—गौरयम् । षट् पुत्रा —

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुत ।
क्षेत्रज क्षेत्रजातश्च स्वगोत्रेणेतरेण वा ॥ ५ ॥

सप्ताङ्ग राज्यम्–

स्वामी जनपदोऽमात्यो दुर्ग कोशो बल सुहृद् ।
परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते ॥ ६ ॥

सप्तधा कीर्ति —दान-पु(ण्य)-विद्वज्जन-वक्तृत्व-काव्य-वर्तन-शौर्यादिभि । सप्तविधमुपमत्वम्—वयोरूपपदज्ञानशीलप्रयोगपर्यन्त चेति । सप्त नया —नैगम-सङ्ग्रह व्यवहार ऋजुसूत्र-शब्द-समभिरूढ-एवम्भूतनामान । सप्तविधं सौभ्यम्—भृता पत्नी, माण्डपदाति, मुण्डितं शीर्षमित्यादि । सप्त भुवनानि तथथा—

भुवनानि निबध्नीयात् त्रीणि सप्त चतुर्दश इति ।

सप्त वारा —आदित्याद्या , समुद्रा वा ऋषय —भृगु-अत्रि-अङ्गिरस(स)-कुत्स-वि(व)शिष्ठ-गौतम-भरद्वाजमेदै । सप्तविधा प्राप्ति –'दाने ज्ञाने जले कामे विज्ञान पात्रसङ्गमे' सर्वकालेषि । सप्त क्षेत्री—चतुर्विधसंघ चैत्य-बिम्ब-पुस्तकै । भयानि—इहलोक-परलोकाकस्मिकादीनि । पौर ज(जा)नपद-योधानामनुग्रह , गुप्तिरक्षणेऽप्रमाद तुल्य भाण्डसमानवृत्ति उचितप्रवृत्ति अनुचितनिवृत्ति इति सप्त प्रशमनानि ।

अष्ट द्वीपा , समुद्रा , मङ्गलानि—दर्पणादीनि, प्रवचनमातर कर्माणि कुलपर्वता वा महाष्टौ भूतय । अष्टविधमभिमानलक्षणम्—ज्ञाने दाने धर्मेऽर्थे कामे बले शत्रुघाते समारम्भे । अष्ट स्वर्णगुणा —विषघात-रसायन-मङ्गलार्थ विनय-प्रदक्षिणावर्त गुरुका-दग्धकुथि । पयोगुणा —

सुगन्धि अ(म्बु)व्यक्तरस तृष्णाघ्नं शुचि शीतलम् ।
स्वच्छं [च] लघु हृद्यं च पयसोऽष्टौ गुणा स्मृता ॥ ७ ॥

अष्टमूर्तय —क्षिति-जल-पवन-हुताशन-यजमान-आकाश-सोम-सूर्या । अष्टौ नार्योऽगम्या —स्वगोत्रजा गुरुपत्नी मित्रभार्या वर्णाधिका प्रव्रजिता कुमारी पुत्रवधू लघुभ्रातृवधूश्चेति । अष्टौ त्याज्या नरा —मूर्ख शठ क्लीब निर्गुण व्यसनी अतिलोभी गर्वित निष्ठुरश्चेति । अष्टविधं स्निग्धानां सुरतावसानम्–आलिङ्गनं चुम्बनं धावनं केशोद्धरणं रागादिवेशनं सीत्कारादिमुच्चनं नखस्पर्शनं मृदुकथनं चेति । बुद्धिगुणा —

शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ।
ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञान च धीगुणा' ॥ ८ ॥

अष्टौ विवाहा'—अलङ्कृत्य कन्याप्रदानं ब्राह्मो विवाह १, विभवविनियोगेन कन्याप्रदान प्राजापत्य २, गोदानमिथुनदानपूर्व आर्ष. ३, यज्ञार्थं ऋत्विजः कन्याप्रदानमेव दक्षिणा स दैवत ४, मातृपितृबन्धूनामप्रामण्यात् परस्परानुरागेण मिथोयोजनायां स गान्धर्व ५, पणबन्धेन कन्यादानमासुरः ६, प्रसह्य कन्याग्रहणाद् राक्षस ७, सुप्तप्रमत्तकन्याग्रहणात् पैशाच. ८ इत्यादि ।

**नव** निधयो, गुप्तयो ब्रह्मचर्यस्य, तत्त्वादीनि—जीवाजीवादीनि, ग्रैवेयकविमानानि, जैने विष्णव' प्रतिविष्णवो बलदेवाश्च । नव शयनगुणा'—अनग्नशायी, प्रसारितगात्रः, श्वेतवसनाच्छादन, अशब्दविशायी, असम्बन्धविशायी, असम्बाधविशायी, समुखशायी, अहमितशायी, स्मृतदेवगुरुशायी, । नव रसा शृङ्गाराद्या, नव नक्षत्रवीध्य इत्यादि ।

**दशधा** साधुधर्म —क्षान्त्यादि, विष्णोरवतारा, दिग्पा(कृपा)ला । दशविधं बलम्—वज्र काय-बुद्धि सन्तोष-स्थान-सुहृज्जन-शस्त्र-मन्त्र-देवता-राजबलै' । दशविधो जय'—ज्ञान-सत्य-प्रताप-सग्राम-आचार-वाक्-निद्रा-आहार-इन्द्रिय-जय, अजयश्चेति । दशविध सग्रह'—ज्ञाने मित्रे पात्रे शौचे प्रवीणयोगे बले यज्ञे धर्मे सग्रहे गुणे चेति । दश दशा इत्यादि ।

**[एकादश]** रुद्रा, एकादश गणधरा वीरस्य, एकादश गणा — नन्द्याद्या' । अङ्गानि आचारादीनीत्यादि ।

**[द्वादशारं चक्रम्, तद्यथा-]**

अरिर्मित्रमरेर्मित्रं मित्रमित्रमत' परम् ।
तथारिमित्रमित्र च विजिगीषो पुर स्मृता. ॥ ९ ॥
पार्ष्णिग्राहस्तत' पश्चादाक्रन्दस्तदनन्तरम् ।
आसारावनयोश्चैव विजिगीषोश्च पृष्ठत' ॥ १० ॥

मध्यम उदासीनश्च—द्वादशार चक्रम् । जैने द्वादश चक्रिणो भरताद्या, तद्यथा—भरत, सगरो, मघवा, सनत्कुमार', शान्ति, कुन्थु', अर', सुभूमो, महापद्मो, हरिषेण, जयनामा, ब्रह्मदत्तेति । सौधर्माद्या कल्पा द्वादश ।

**त्रयोदश** ताम्बूलगुणा —

ताम्बूलं कटु-तिक्तमुष्ण-मधुर क्षारं कषायान्वितं
पित्तघ्न कृमिनाशन द्युतिकर दुर्गन्धनिर्नाशनम् ।

वक्त्रस्यामरणं विशुद्धिकरणं कामाग्निसंदीपनं
ताम्बूलस्य सखे त्रयोदश गुणा स्वर्गेऽपि ते दुर्लभा ॥ ११ ॥

चतुर्दश भुवनानि, तथा विद्यास्थानानि—शिक्षा-कल्प-व्याकरण-छन्दो-श(वि)चिति-ज्योतिष-निरुक्तानीति षडङ्गानि, चत्वारो वेदा, इतिहास-पुराण-मीमांसा-न्यायशास्त्रं चेति। गुणस्थानकानि, रज्जव, पूर्वाणि ।

पञ्चदश कर्मभूमय, तिथय, सिद्धाश्च ।
षोडश देव्य चन्द्रकला ।

सप्तदशविधः संयम ।

अष्टादश प्रकृतय —सूत्रधार, सुवर्णकार, लोहकार, चर्मकार, मालिय, सम्बोलिय छिम्पा, सुइय, स्वाभिय, साळवी तेरमा, मोचिय भाड गाम्छा, बरड, चित्रकार, कुम्भकार, नापित-प्रकृतय । अष्टादश अधमा —मातङ्ग, अन्त्यज, चर्मपाल, कौलिक, भिल्ल, शावर मेय ताइय नीजाचा, म्लेच्छ पुलिन्द, मद्दवाल, नोडा, तुर(रु)ष्क, काबा पार्वतीय आहेडिय, शौकरिक, जालिक । अष्टादश लोकप्रसिद्धानि मतानि । 'अष्टादशद्वीपनिखातयूप' [ रघुवंश ६ ३८ ] । विनोदपात्राणि—मालाकार आत छिव स्निग्ध मन्त्रि महत्तम अमात्य बुद्धि उभय मुख आख्यायिक देश पुरुष सर्व धन [धान्य] काम विज्ञानं चेति । यथासम्भवं किञ्चिल्लिख्यते—

द्वाविंशतिः परीषहा । चतुर्विंशतिः तीर्थकरा । अष्टाविंशतिर्नक्षत्राणि । द्वात्रिंशल्लक्षणानि—

छत्रं पुष्पफलं ध्वजोऽथ कलशः कन्दर्पकूर्माङ्कुशौ
लक्ष्मी स्वस्तिकतोरणं वरसर मशानन्तो मेदिनी ।
मत्स्याश्च-गजौ नदी रवि-शशी प्रासादमत्स्यौ यवौ
यूपस्तूपकमण्डलौ गिरिवर सच्चामर दर्पणम् ॥ १२ ॥
उक्षा पताका कमलाभिषेक सदामकेकी किल पुण्यभाजाम् ।
शरीरके सन्ति सुमानुषाणां द्वात्रिंशदित्थं किल लक्षणानि ॥ १३ ॥

चतुर्भिसप्तम्बरा —कार्पटिक-उन्नाग्निक-गणपति-वैदेहिक-तापस कितव-किरात-मामणिक-अहितुण्डिक शौण्डिक-सौभिक-पाटच्चर वि विदूषक-पीठमर्दक-नट-नर्तक-गायन-वादक जीवक-गणक-शाकुनिक भिषज ऐन्द्रजालिक-नैमित्तिक-सूद-आरालिक-[स्नापक]संवाहक-तीर्ण्य[द]रस-मूक-बधिर-अन्धप्रधान इत्यादि-यामिमेदेनो(मा)वसर्गवर्ग ।

**द्विचत्वारिंशत् प्रबन्धाः—**

स्वरार्त सुरपूर्व स्यात् करणं वर्त्तिनी तथा ।
विवर्त्तिनी मातृका स्यादेलाढीकी तु क्रौम्बड ॥ १४ ॥
लम्भको जयमाला स्याच्चर्या मङ्गल एव च ।
एकताली रासक स्यादेकचारिण्यत परम् ॥ १५ ॥
कैवाटो नन्दनामाथ पञ्चतालेश्वराभिध' ।
गद्य च मङ्गलाचारो मनोरम उदीरित ॥ १६ ॥
प्रमोदो वर्णसर-कौसर-सदोहकस्तथा ।
सोमकीर्त्ति प्रबन्ध स्यात् ततो रागकदम्बक ॥ १७ ॥
आर्या गाथा चच्चरी च वीरश्री शुकसारिका ।
सोमवल्लभसज्ञ स्यादथ कन्दश्चतुर्मुख ॥ १८ ॥
प्रतापवर्द्धनाख्यश्च विजयश्चक्रवालक ।
त्रिभङ्गिविक्रमश्चाथ वाच्य' क्रौञ्चपदस्तथा ॥ १९ ॥
कलहंसोऽथ मन्तव्यो नाम्ना हरिविलासक' ।
प्रबन्धानामिति प्रोक्ताश्चत्वारिंशद्द्वयादिका(' धिका )॥ २० ॥

[ इति ] प्रबन्धनामानि ।

अथ **षट्त्रिंशत् रागाः** । केषाचिन्मते **द्विचत्वारिंशत्** । तेषा नामानि—

श्रीसोमराग श्रीरागो मालवश्रीवसन्तक ।
दीपको भैरवस्तोडी पञ्चमश्लोकसाटक ॥ २१ ॥
वेलाकुली मध्यमादिर्गौडी गुण्डकृतिस्तथा ।
गन्धारसिद्धिर्गान्धारो बङ्गालो गूर्जरी तत ॥ २२ ॥
वराटी मोटकी रामकृति प्रथममञ्जरी ।
धन्यासिका डोम्बकृति गौडी देवकृतिस्तथा-॥ २३ ॥
सौराष्ट्री शुद्धनाटा च छाया नाटा च भैरवी ।
अन्धाली द्रविडी देवशाखा वाक्पतिराटिका ॥ २४ ॥
अथ कर्णाट बङ्गाल कामोदा ललिताम्बर ।
मल्लार शाबरी देश वल्लाता स्तम्भतीर्थिका ॥२५॥

अथ ताला –

तालश्चञ्चत्पुटः पूर्वं ततश्चाचपुटाभिधः ।
षट्पिता पुत्रकश्चैव संपक्वेष्टाकनामकः ॥२६॥
उद्घट्टश्चादिताळश्च द्वितीयोऽङ्कुतल्लकः ।
मण्ठश्च प्रतिमण्ठश्च कङ्कालः प्रतिताळकः ॥२७॥
गारुडिश्चचरी क्रीडा त्रिभङ्गिश्चैकताळिका ।
जयश्री जल्लताळश्च श्रीरङ्गो रङ्गभूषणः ॥२८॥
पार्वती लोचनः सोमकीर्तिश्च जयमङ्गलः ।
सिंहविक्रीडितः सिंहनन्दनो वीरविक्रमः ॥२९॥
मुकुन्दो मल्लिकामोदः श्रीनन्दन-चतुर्मुखौ ।
प्रतापशेखरः सोमवल्लभो दर्पणो रविः ॥३०॥
सम्पाभिनन्दो नान्दी च तुरङ्गगति-मन्मथौ ।
गजेन्द्रगति-लक्ष्मीशौ त्रिपञ्चाशिंशदित्यमी ॥३१॥

[इति] ताळनामानि ।

चतुःषष्टियोगिन्यः –चतुकी बाली कविली कुमारी कागी जल्लहरी सीमली नीलकण्ठ(ण्ठी) पारसी दूनत्री शाङ्गा पिङ्गला मनाङ्गसीता दाहूलर श्रीपर्या नन्दा श्रीमङ्गला श्रीसिता श्रीईसार्वा श्रीमकरा अमरा सनसा मनसा विपङ्गा अलोभी अभीव वरनकुमारि(री) मवलकुन्दा भिम्भल साङ्गारिणी ज्वालामालिनी महलक्षि(क्ष्मी) दाहना रसा मरसा कदल मामिन्या कालिका हरसिद्धि बाह्मि(णी) कोसला मयूरती अमकुमारी जया विजया नेता विनेता मेठपी महामाया आशापुरा एकवीरी ईश्वरी विप्पल ऊ विसवासिणि(णी) हिडम्ब शनरेमा नाल्भिरी स्वर्सीयर्मी हियपादर्स हिरपवाही भिमशाम्भिनी हिमेश्वरी महमव ६४ ॥

पीठ–मड्ठ कोल्लापुर उड्डियाणु जालन्धर कामरु अर्बु ।

मातरः ७ –ब्रह्माणी माहेश्वरी कौमारी वैष्णवी वाराही ऐन्द्राणी चामुण्डा ।

ऋषयः—मरीच-काश्यप आत्रेय-भृगु नारद गालव वशिष्ठ कण्व जाबालि-विश्वामित्र-कपिञ्जल-पुलस्त्य-पुलह-अगस्त्य-पिप्पलाद पाराशर- गर्ग- शाण्डिल्य कौण्डिन्य प्रभृतिमैत्रेयिककपय ।

**आदित्याः**—इन्द्र विष्णु विवस्वान् मित्रु(त्र) अंशु धाता त्वष्टा पूषा वरुणु अर्यमा भृगु सविता १२ ।

**अष्टषष्टिर्महातीर्थानि**—प्रभास-ॐकार—अमरेश्वर-विश्वेश्वर-महाकाल-कनखल-कुरुक्षेत्र-मरु-चण्डीश-भस्मगात्रप्रभृतीनि ।

**द्वासप्ततिः कलाः**—गीत वाद्य नृत्य गणित पठित ५ लिखित वक्तृत्व कवित्व कथा वचन १० नाटक व्याकरण छन्दोऽलङ्कार दर्शन १५ ध्यान धातुर्वा(वा)द धर्म अर्थ काम २० वाद बुद्धि शौच [मन्त्र] विचार २५ नेपथ्य विलास नीति शकुन क्रीत ३० चित्र संयोग हस्तलाघव सूत्र कुसुम ३५ इन्द्रजाल सूचिकर्म स्नेह पान आहार ४० [विहार] सौभाग्य प्रयोग गन्ध वास्तु ४५ रत्न पात्र वैद्य देशभाषित देशविजय ५० वाणिज्य आयुध युद्ध समय वर्तन ५५ हस्ति तुरग पुरुष नारी पक्षि ६० भूमि लेप काष्ठ सैन्य वृक्ष ६५ छद्म हस्त उत्तर शरीर प्रत्युत्तर ७० शास्त्र-[लक्षण]कलाश्चेति ७२ ।

**चतुरशीतिः कलाः**, चतुरशीतिर्विज्ञानानि—हेतुविज्ञान तत्त्व मोहन कर्म धर्म ५ लक्ष्मी योग शह्व दन्त काल १० गुटिका रसायन वचन कवित्व मन्त्र १५ यन्त्र तन्त्र मर्दन नेपथ्य खत्रकर्म २०इष्ट लेप मूत्र चित्रक रङ्ग २५ सूचिकर्म शकुनकर्म छद्म कर्मकर राग ३० गन्धयुक्ति आगार शैल काच कांस्य ३५ काष्ठ कुम्भ लोह पत्र वंश ४० नख देश तृण प्रासाद धातु ४५ विभूषण स्वरोदय द्यूत अध्यात्म अग्नि ५० विद्वेषण उच्चाटन स्तम्भन मोहन वशीकरण ५५ वस्तु स्वयभू हस्ति अश्व पक्षि ६० स्त्री चक्र वस्त्र पाशुपाल्य कृषि ६५ वाणिज्य लक्षण काल शस्त्रबन्ध युद्धकरण ७० वियुद्धकरण आखेटक कुतूहल कोशपुष्प ७५ इन्द्रजाल पान अशन शयन विनोद ८० जन रत्न सौभाग्य शौच ८४ इत्यादि । केषाञ्चिन्मते विनय नीति आयुध वाद व्यापार धारणि विज्ञानं चेति ।

**चतुरशीतिर्देशाः**– [पूर्व०–] गौड कन्यकुब्ज कोल्लाक कलिङ्ग अङ्ग वङ्ग कुरङ्ग आचाल्य(आराढ्य) कामाक्षे[1], ओण्ड्रे[2] पुण्ड्रे[3] उडीश(स)[4] मालवे[5] लोहित–[पाद],[6] **पश्चिम०–** काछ(कच्छ) वाल्म्भ सौराष्ट्र कुङ्कण लाट श्रीमाल अर्बुद मेदपाट मरु वरेन्द्रे[7] यमुना[8] गङ्गाती(पा)रे[9] अन्तर्वेदि[10] मागधे[11], **मध्य०–** कुरु डाहल कामरूप काञ्ची[12] अवन्ती[13]

१–४ अमी देशा वस्तुतो मध्यदेशेषु वर्तन्ते ।

५ अय देश पश्चिमदेशेषु गण्यते ।

६ अस्य देशस्य गणना मध्यदेशेषु क्रियते ।

७–११ अमी देशा पूर्वदेशेषु वर्तन्ते । 'यमूना' स्थाने 'यामुन' इति प्रयुज्यते ।

१२ अय देशो दक्षिणापथे स्थित ।

१३ अस्य देशस्य पश्चिमदशेपु गणना ।

स्थानाज्ञा, वौद्धानां तु संज्ञाज्ञा। शैवाना समूह कविलास (कैलास'), भट्टानां सउंदसि (सदस्), वणिजां च महाजन , ताम्बूलिकानां लोक , सूत्रधाराणा च आधाट', तुर( रु )-ष्काणा जमाथ, मलिनाना समूहो वहुसि , योगिना च समय इत्यादि ।

हीरुयाणी--इत्यादि षट्कम् । पत्तनादि द्वादशकम् । मातरादिश्चतुर्विंशति । वड्डू इत्यादि षट्त्रिंशत् । भालिज्यादि द्विचत्वारिंशत् । हर्षपुरादि द्विपञ्चाशत् । श्रीनार प्रभृति षट्पञ्चाशत्। जम्बूसर.प्रभृति षष्टि । पडवाणप्रभृति षट्सप्तति । दर्भावती-प्रभृति चतुरशीति । पेटलापद्रप्रभृति चतुरुत्तर शतम् । खदिरालुकाप्रभृति दशोत्तरं शतम् । भोगपुरप्रभृति षोडशोत्तरम् । धवलक्ककप्रभृति पञ्चशतानि । मोहडवासाद्य-मर्द्धाष्टमशतम् । कौङ्कण[ ] चतुर्दशाधिकानि चतुर्दशशतानि । चन्द्रावर्ताप्रभृति अष्टा-दशशतानि । द्वाविंशतिशतानि महीतटम् । नवसहस्राणि सुराष्ट्रासु । एकविंशति-सहस्राणि लाटदेश । सप्तति सहस्राणि गूर्ज्जरो देश पारेतश्च । अहूठलक्षाणि ब्राह्मण-पाटकम् । नव लक्षाणि डाहला । अष्टादशलक्षाणि द्विनवत्यधिकानि मालवो देश । षट्त्रिंशल्लक्षाणि कान्यकुब्ज । अनन्तमुत्तरापथ दक्ष(क्षि)णापथ चेति । नलकूबरयो द्यूतपराजये कार्यमनेनेति ।

[ इति समूहवाचका शब्दा ]

## आभानकाः ।

सर्वसाधारि(र)णी गङ्गा न कस्यापि हि पैतृकी ।
उदस्ते शकटे हन्त किं कर्त्तास्ति गणाधिप' ॥
खल क्रमान्तदानेऽपि व्याप्नोत्युच्छीर्षकावधि ।
उदङ्कोऽम्भोधिपोतेऽपि लभते भरण निजम् ।
दुन्नि न हुन्ति कयाई खल्ली सीमन्तओ चेव ।
क्षते हि क्षारनिक्षेप ।
दुर्बलाया वृतौ छिद्र कर्तुं को नाम न क्षम ।
दैव दुर्बलघातकम् ।
दग्धस्योपरि पिटकोद्गम ।
पूर्णे हि शकटे हन्त किं स्यात् पिञ्जानक गुरु ।
न पञ्चाशता जीव्यते किन्तु प्रत्याशया ।
किं हस्तिगुडा सहेत रासभ ।
गते हिमालयं वृद्धे किं नु वृष्टि करिष्यते ।

स्थानाज्ञा, बौद्धानां तु संज्ञाज्ञा। शैवाना समूह' कविलास' (कैलास ), भट्टाना सउंदसि (सदस्), वणिजां च महाजन , ताम्बूलिकानां लोक , सूत्रधाराणा च आघाट', तुर( रु )-ष्काणा जमाथ, मलिनाना समूहो वहुसि , योगिना च समय इत्यादि ।

हीरुयाणी–इत्यादि षट्कम् । पत्तनादि द्वादशकम् । मातरादिश्चतुर्विंशति । बडू इत्यादि षट्त्रिंशत् । भालिज्यादि द्विचत्वारिंशत् । हर्षपुरादि द्विपञ्चाशत् । श्रीनार प्रभृति षट्पञ्चाशत्। जम्बूसर.प्रभृति षष्टि । पडवाणप्रभृति षट्सप्तति । दर्भावती-प्रभृति चतुरशीति । पेटलापद्रप्रभृति चतुरुत्तर शतम् । खदिरालुकाप्रभृति दशोत्तरं शतम् । भोगपुरप्रभृति षोडशोत्तरम् । धवलक्ककप्रभृति पञ्चशतानि । मोहडवासाद्य-मर्द्धाष्टमशतम् । कौङ्कण[ ] चतुर्दशाधिकानि चतुर्दशशतानि । चन्द्रावतीप्रभृति अष्टा-दशशतानि । द्वाविंशतिशतानि महीतटम् । नवसहस्राणि सुराष्ट्रासु । एकविंशति-सहस्राणि लाटदेश । सप्तति सहस्राणि गूर्ज्जरो देश पारेतश्च । अहूठलक्षाणि ब्राह्मण-पाटकम् । नव लक्षाणि डाहला । अष्टादशलक्षाणि द्विनवत्यधिकानि मालवो देश । षट्त्रिंशल्लक्षाणि कान्यकुब्ज । अनन्तमुत्तरापथ दक्ष(क्षि)णापथ चेति । नलकूबरयो द्यूतपराजये कार्यमनेनेति ।

[ इति समूहवाचका शब्दा ]

## आभानकाः ।

सर्वसाधारि(र)णी गङ्गा न कस्यापि हि पैतृकी ।
उदस्ते शकटे हन्त किं कर्त्तास्ति गणाधिप ॥
खल क्रमान्तदानेऽपि व्याप्नोत्युच्छीर्षकावधि ।
उदङ्कोऽम्भोधिपोतेऽपि लभते भरण निजम् ।
दुन्नि न हुन्ति कयाइ खल्ली सीमन्तओ चेव ।
क्षते हि क्षारनिक्षेप ।
दुर्बलाया वृतौ छिद्र कर्तुं को नाम न क्षम ।
दैव दुर्बलघातकम् ।
दग्धस्योपरि पिटकोद्गम ।
पूर्णे हि शकटे हन्त किं स्यात् पिञ्ञानक गुरु ।
न पञ्चाशता जीव्यते किन्तु प्रत्याशया ।
किं हस्तिगुडा सहेत शसभ ।
गते हिमालय वृद्धे किं नु वृष्टि करिष्यते ।

उच्चैर्वृत्ति सपुष्करव्यतिकर ससारविष्कम्भकं
भिन्द्याद्वो भरतस्य भाषितमिव ध्वान्तं पयो यामुनम् ॥ ३४ ॥

चाणा(ण)क्यपरिचयो यथा—

स्वामी प्रमोदेन मदेन मन्त्री, कोपेन राष्ट्र व्यसनेन कोश ।
छिद्रेण दुर्गं विषमेन सैन्य, लोभेन मित्र क्षयमेति राज्ञाम् ॥ ३५ ॥

वात्स्यायनपरिचयो यथा—

अधरे बिन्दु कण्ठे मणिमाला कुचयुगे शशिप्लुतकम् ।
तव सूचयन्ति सुन्दरि कुसुमायुधशास्त्रपण्डित रमणम् ॥ ३६ ॥

[ कुट्टनीमत, श्लोक ४०३ ]

धनुर्वेदीय—

सदक्षिणापाङ्गनिविष्टमुष्टिर्नतांशमाकुञ्चितसव्यपादम् ।
ददर्श चक्री कृतचारुचाप प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥ ३७ ॥

[कुमारसम्भव, स. ३, श्लोक. ७० ]

उत्पाद्यसंयोग—

उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयस पतेताम्।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्ष ॥ ३८ ॥

[माघकाव्य, स. ३, श्लो. ८ ]

भारतपरिचयो यथा—

भगदत्तप्रभावाद्या कर्णशल्या कूटस्वना ।
सेनेव कुरुराजस्य कुट्टिनी किन्तु निष्कृपा ॥ ३९ ॥

रामायणपरिचयो यथा—

उपशमितमेघनादं प्रज्वलितदशानन मुदितरामम् ।
रामायणमिव सुभगं दीपदिनं हरतु दुरित व ॥ ४० ॥

यथा वा—

जनस्थाने भ्रान्तं कनकमृगतृष्णान्वितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृता लङ्का भर्तुर्वदनपरिपाटीषु घटना
मयाप्त रामत्वं कुश-लवसुता न त्वधिगता ॥ ४१ ॥

[ —अभिनन्दस्य ]

उच्चैर्वृत्ति सपुष्करव्यतिकरं ससारविष्कम्भकं
भिन्द्याद्वो भरतस्य भाषितमिव ध्वान्त पयो यामुनम् ॥ ३४ ॥

चाणा(ण)क्यपरिचयो यथा—

स्वामी प्रमोदेन मदेन मन्त्री, कोपेन राष्ट्रं व्यसनेन कोशः ।
छिद्रेण दुर्गं विषमेन सैन्यं, लोभेन मित्रं क्षयमेति राज्ञाम् ॥ ३५ ॥

वात्स्यायनपरिचयो यथा—

अधरे बिन्दुः कण्ठे मणिमाला कुचयुगे शशिप्लुतकम् ।
तव सूचयन्ति सुन्दरि कुसुमायुधशास्त्रपण्डित रमणम् ॥ ३६ ॥

[ कुट्टनीमत, श्लोक ४०३ ]

धनुर्वेदीयः—

सदक्षिणापाङ्गनिविष्टमुष्टिर्नतांसमाकुञ्चितसव्यपादम् ।
ददर्श चक्री कृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥ ३७ ॥

[कुमारसम्भव, स. ३, श्लोक. ७० ]

उत्पाद्यसंयोग —

उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयस पतेताम् ।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्ष ॥ ३८ ॥

[माघकाव्य, स. ३, श्लो. ८ ]

भारतपरिचयो यथा—

भगदत्तप्रभावाद्या कर्णशल्या कूटस्वना ।
सेनेव कुरुराजस्य कुट्टिनी किन्तु निष्कृपा ॥ ३९ ॥

रामायणपरिचयो यथा—

उपशमितमेघनाद प्रज्वलितदशानन मुदितरामम् ।
रामायणमिव सुभगं दीपदिनं हरतु दुरित वः ॥ ४० ॥

यथा वा—

जनस्थाने भ्रान्त कनकमृगतृष्णान्वितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृता लङ्का भर्तुर्वदनपरिपाटीषु घटना
मयाप्त रामत्वं कुश-लवसुता न त्वधिगता ॥ ४१ ॥

[ —अभिनन्दस्य ]

चित्रपरिचयो यथा—

अतथ्यान्यपि तथ्यानि दर्शयन्ति विचक्षणाः।
समे निम्नोन्नतानीव चित्रकर्मविदो जनाः ॥ ४६ ॥

[व्यासस्य]

देशपरिचयो यथा—

भोजैर्भञ्जनभीरुभिर्विलुलितं व्यामीलितं मालवै-
र्मद्रैर्विद्रुतमेव यानमसकृद्वन्ध्रैरधो मागधैः।
वङ्गानामभिमन्युकङ्कणरवैर्वाते पुरःसूचिते
मीनैः संकुचितं परस्परधृतैर्नीरन्ध्रमन्ध्रैः स्थितम् ॥४७॥

वृक्षपरिचयो यथा—

जम्बूलिम्बकदम्बनिम्बबकुलैर्लक्षाक्षभल्लातक-
द्राक्षाकिंशुककर्णिकारकदलीजम्बीरकोदुम्बरैः।
सा सन्तानकबिल्वतिल्वतिलकश्लेष्मातकारग्वधै-
र्न्यग्रोधार्जुनशातनाशनवनश्यामान् ददर्शाश्रमान् ॥४८॥

वनेचरपरिचयो यथा—

वामस्कन्धनिष्पन्न(षण्ण)शार्ङ्गकुटिलप्रान्तार्पिताधोमुख-
स्यन्दच्छोणितलम्बमानशशकान् पाणिस्खलच्चामरान्।
ज्यान्तप्रोतकपोतपोतनिपतद्रक्ताक्तभूमितटान्
साऽपश्यत् करिकुम्भभेदजनिताक्रन्दान् पुलिन्दान् पुरः ॥४९॥

[क्षेमेन्द्रस्य।]

भक्तिपरिचयो यथा—

बाल्यादेव निरर्गलप्रणयिनी भक्तिर्भवानीपतौ
जन्माभ्यासविकासवासितमनःसंवाससंवादिनी।
प्रायः प्राक्तनकर्मनिर्मितमहामोहप्ररोहापहा
भव्यानां भवभीतिभञ्जनसखी संजायते सन्मतिः ॥५०॥

विवेकपरिचयो यथा—

आशापाशविमुक्तियुक्तममलं सन्तोषमान्यं मनः
सेवायासविवर्जितं विहरणं मायाविहीनं वचः।

१ °कारस्कर° इति पठितव्यम्।

चण्डीशार्चनमात्मशुद्धिजननी गङ्गेव सत्सङ्गति
सोऽयं संतरणे परः परिकरः संसारवारांनिधेः ॥५१॥

प्रशमपरिचयो यथा—

चित्तं चापलिकासिपांसुमलिनं सर्वं दिना तावकं
भोगा दुर्गतिगोत्रबन्धचपलं पुण्यस्मितं यौवनम् ।
स्वप्ने बन्धुसमागमं तनुमपि प्रस्थानपुण्यप्रपां
नित्यं चिन्तयतां भवन्ति न सतां भूयो भवाम्भवः ॥५२॥

तथा—

स कोऽपि स्मर्यतां मन्त्रः स देवः कोऽप्युपास्यताम् ।
येन न स्त्रीपिशाचीयं ग्रसते शीलजीवितम् ॥५३॥
संसार तव पर्यन्तपदवी न दवीयसी ।
अन्तरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः ॥५४॥

हस्तिपरिचयो यथा—

उन्नौ कुम्भौ कपिशदशनो बन्धुरस्कन्धसन्धि-
स्निग्धाताम्रपृथुनखसमश्मश्रुलम्बायतोरुहस्तः ।
शूरः सप्तच्छदपरिमलः स्पर्धिदानोदकोऽयं
मन्द्रः सान्द्रद्रुमगिरिसरित्तीरचारी करीन्द्रः ॥५५॥

वैद्यकपरिचयो यथा—

मार्ष्टि चन्दनपङ्कपङ्कजविशल्यच्छेदावलीं मुहु-
स्तापः शाप इवैष शोषणपटुः कम्पः सखीकम्पनः ।
श्वासाः संवृततारहारतरलाः संभिन्नचीनांशुका
जाता प्रागनिदानमदनमहारम्भः स तस्याधरः ॥५६॥
[ पद्मकादम्बर्याम् । ]

ज्योतिःशास्त्रपरिचयो यथा—

यामाष्टौ क्षपयतां क्षपा कलयतां छाया समाचिन्वतां
कालेयः श्रेयस्करमुहूर्तोर्मिणयतां मौहूर्तिकानामयम् ।
धन्या सा रजनी सदैव सुदिनं पुण्यः स एव क्षणो
यत्राज्ञातपरः प्रियानयनयोः सीमान्तमेति प्रियः ॥५७॥
[मधुपरस्य । ]

धनुर्वेदपरिचयो यथा—

आर्यस्योच्चभुजौघलाघववती संधानसंबन्धिनी
स्थाणुस्थानकसौष्ठवप्रणयिनी चित्रक्रियालङ्कृतिः ।
निःस्पन्देन मयातिविस्मयमयी सत्यं स्थितप्रत्यया
संहारे खरदूषणत्रिशिरसामेषैव दृष्टा स्थितिः ॥५८॥

[कनकजानक्याम् ।]

गजलक्षणपरिचयो यथा—

कर्णाभ्यर्णविकीर्णचामरमरुद्विस्तीर्णनिःश्वासवान्
शङ्खच्छत्रविराजिराज्यविभवद्वेषी निलीनेक्षणः ।
स्मृत्वा राघवकुञ्जरः प्रियतमामेकाकिनीं कानने
संत्यक्तां चिरमुक्तभोगकवलः क्लेशोष्मणा शुष्यति ॥५९॥

[कनकजानक्याम् ।]

तुरगलक्षणपरिचयो यथा—

आवर्तशोभी पृथुसत्त्वराशिः फेनावदातः पवनोरुवेगः ।
गम्भीरघोषोऽद्रिविमर्दखेदादश्वाकृतिं कर्तुमिवोद्यतोऽब्धिः ॥६०॥

[अमृततरङ्गकाव्ये ।]

छायोपजीवी यथा—

तत्त्वाश्रयस्थितिरियं तव कालकूट !
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वापि पुनः खलानाम् ॥६१॥

मात्सर्यतीव्रतिमिरावृतदृष्टयो ये
ते कष्ट नाम न खला व्यथयन्ति चेतः ।
मन्ये विमुच्य गलकन्दलमिन्दुमौले-
र्येषां सदा वचसि वल्गति कालकूटः ॥६२॥

पदकोपजीवी यथा—

यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति
स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः ।

वल्लीवनलवननेमि' श्रीनेमिः । पद्मावतीवैराव्याभ्यां संगीतपार्श्वे पार्श्वे । निहिता-न्तरङ्गवीरो वीर इति ॥

स्मरहरो हर' । अरुद्रो रुद्र' । कपालशेखरश्चन्द्रशेखर' । कृतजगत्त्रयकालः कण्ठेकाल' । सुमूर्तिरष्टमूर्तिः ॥

कृतदैत्यार्दनो जनार्दन' । सुपाणि रथाङ्गपाणि' । सत्तम' पुरुषोत्तम' । सेवा-गतवसुदेवो वासुदेव' ॥

सुरज्येष्ट' सुरज्येष्ठ' । विश्वविधाता विधाता । प्रकटितजगद्विधिर्विधिः ॥

वरदा शारदा । शुभकला कमला । हस्तजितपद्मावती पद्मावती । प्रकटित-मङ्गला सर्वमङ्गला । नृपचक्रनाभि. श्रीनाभि' । पालितभरत. श्रीभरत' । कृतपरमारो धुन्धुमार' । सत्त्वजलधिचन्द्रो हरिश्चन्द्र' । श्रिया निर्जितवसुदेवो वसुदेवः । अलघु' रघु' । शौर्याभिरामो राम' । महारथो दशरथ' । यज्ञप्रकटितसागर' सगरः । शुभधाता मान्धाता । अतुल्वीर्य कार्त्तवीर्य । यदुचक्रापीडो दत्तपरवधूवैधव्यपीडो गौड' । सूर्य-गाम्भीर्यपात्रं परममित्रम् । दानवकुलोत्तस' कंस' । सवलो वल' । महाराजरुधिर-कुलाम्वरैकरोहिणी रोहिणी । रूपप्ररूपितसुरदेवी पट्टदेवी । कृतरतिजया विजया । पुष्प-धन्वसेना सेना । गुणवती प्रभावती । प्रकटितार्था सिद्धार्था । कृतमङ्गला सुमङ्गला । धर्मधारिणी धारिणी । कृतभद्रा सुभद्रा । प्रचण्डा चामुण्डा । इत्यादि ॥

पथिकवधूदत्तरागस्तडाग । मुदां पात्री धात्री । महावीरजननी जननी । प्रेमपात्र कलत्रम् । गङ्गाजलपवित्र' पुत्र' । कृतप्रीतिर्नीति' । दुर्निवारो मार' । सकलपुरुष-रत्नरत्नाकरं नगरम् । रिपुदुर्णिवार कुठार । अधर्मकर्मपाक श्वपाक । अतुच्छो गच्छ' । स्वकुलगगनतरणिर्गणि । अमिति समिति । असख्यं संख्यम् । नरककारागाराकारा दारा । अस्थैर्यमुखं सुखम् । अमानो मान । वायुवाजी वाजी । अगजो गजः । कृतपरविपत्ति पत्ति । कराल करवाल । परविदारणेष्वकृपण कृपाण । पीयूष-सारिणी वाणी । लब्धप्रशंसो हंस ॥

तथा—पुण्यपाली प्रपाली । स्तुत्यरूपा कूपा' । अभिरामा आरामा' । कमल-कुवलयदत्तभागास्तडागा । कुनयफलवल्ली पल्ली । अस्तोक शोक । द्रुमद्रोणीधरो भूधर । स्वार्थविमुखी सखी । गुणगेह देहम् । तारो हार । अमृतरचनं वचनम् । खण्डितवृजिनो जिन । भवाम्भोधेररित्रं चरित्रम् । विभावरीतिमिरतस्करो भास्कर । रजा पात्र-गात्रम् । लोकलोभनो भूधन । अशावारिणे शान्तिकारिणे । सत्तमो

गौतम । शीलभद्र स्थूलभद्र । सुबाहु बाहु । रणाशक शक । वैरलो रथ । क्रियायुष्कसुरुष्क । तुष्कतुष्कसुरुष्क ।

उत्तम्भविश्रुतमेरुमरसुर्लाटाटवीपावको
कच्छच्छत्रभुजङ्गराजगरुडो गौडाम्भिकुम्भोद्भव ।
श्रीमद्गूर्जरराजकुञ्जरहरिः कीराम्बकाराग्यमा
काम्बोजाम्बुजचन्द्रमा विजयते भोजो दिशां जित्वर ॥६८॥

चोड क्रोडं पयोधेर्विशसि निवसते स्तम्भयन्धो गिरीणां
कर्णाट पाणवर्धं न भजति भजते गूर्जरो निर्झराणि ।
चेदिर्दैलीयते स्म क्षितिपतितिलक कान्यकुब्जोऽथ कुब्जो
भोजस्तु तत्प्रमाणप्रसरमरभयव्याकुलो राजलोक ॥६९॥

कोणे कोङ्कणक कपाटनिकटे लाटः कलिङ्गोऽङ्गणे
सूरे गूर्जरनन्दनो मम पिताप्यर्पितस्थण्डिले ।
इत्थं नाथ विवर्तते निशि मिथ प्रत्यर्थिनां प्रस्तर(स्वप्न)
स्थानान्यन्वभवो निरीक्षितस्तद्दिशाभागके ॥७०॥

इत्यादि ॥

कारणमिव कृतयुगस्य, बीजमिव विबुधसर्गस्य, उत्पत्तिद्वीपमिव दर्पस्य, एकागारमिव करुणाया प्रतिवेशकमिव पुरुषोत्तमस्य, सन्निवर्तनमिव पराक्रमस्य, सर्वविद्यासङ्केतगृहमिव सरस्वत्या, द्वितीयामृतमथनमिव लक्ष्मीसमुत्थानस्य, बलदर्शनमिव वैदग्ध्यस्य, सर्वस्थानमिव स्थितीनां सर्वस्वकथनमिव कान्ते, अपवर्गमिव अल्पपरमाणुसर्गस्य, सकलभुवनरक्षाप्रायश्चित्तमिव राज्यस्य सर्वस्वाकसन्दोहामलकन्दमिव कन्दर्पस्य, उपायमिव पुरन्दरदर्शनस्य तपोवनमिव धर्मस्य, कन्यान्तःपुरमिव कलानां, परमप्रमाणमिव सौभाग्यस्य, राजसर्गसमाप्त्यवभृथस्नानदिवसमिव सर्वप्रजापतीनां, गम्भीरं च प्रसन्नं च त्रासजननं च रमणीयं च कौतुकजननं च पुण्यं च चक्रवर्तिनं हर्षमद्राक्षीत् ।

[हर्षचरिते द्वितीयोच्छ्वासे ।]

नहुष परकलत्राभिलाषी महाभुजङ्ग आसीत् । ययातिराहितब्राह्मणीपाणिग्रहण पपात नरके । प्र(सु)द्युम्न स्त्रीमय एवाभवत् । सोमकस्य प्रख्याता जगति जन्तुवधनिर्घृणता । मान्धाता मार्गणस्य व्यसनेन सपुत्रपौत्रो रसातलमगमत्(गात्) । पुरुकुत्स कुत्सितं कर्म तपस्व्यपि मेकलकन्यायामकरोत् । कुवलयाश्वो भुजङ्गलोक

परिग्रहादश्वतरकन्यामपि न परिजहार । सम्वरणोऽमित्रदुहितरि विक्लवतामगात् । दशरथ [1][इष्टरामोन्मादेन मृत्युमवाप । कार्तवीर्यो गोब्राह्मणातिपीडनेन निधनमयासीत् । मरुत्त इष्टवहुसुवर्णकोऽपि देवद्विजवहुमतो न वभूव । शन्तनुरतिव्यसनादेकाकी वियुक्तो वाहिन्या विपिने विललाप । पाण्डुर्वनमध्यगतो मत्स्य इव मदनरसाविष्ट प्राणान्मुमोच । युधिष्ठिरो गुरुभयविषण्णहृदयः समरशिरसि सत्यमुत्सृष्टवान् । इत्थं नास्ति राजत्वमपकलङ्कमृते देवदेवादमुत सर्वद्विपभुजो हर्षात् । ]

[ हर्षचरिते तृतीयोच्छ्वासे । ]

[शरद्गगनमिव पिण्डतां नीतम्, कालिन्दीप्रवाहमिव स्तम्भितजलम्, नन्दकजिगीषया कृष्णकोपित कालियमिव कृपाणतां गतम्, लोकविनाशाय प्रकाशित धारासारम्, प्रलयकालमेघखण्डमिव नभस्तलात् पतितम्, दृश्यमानविकटदन्तमण्डलं हासमिव हिंसायाः, हरिवाहुदण्डमिव कृतदृढमुष्टिग्रहम्, सकलभुवनजीवितापहरणक्षमेण कालकूटेनेव निर्मितम्, कृतान्तकोपानलतप्तेनेवाय]सा घटितम्, अतितीक्ष्णतया पवनस्पर्शेनापि रुषेव क्वणन्तम्, मणिसभाकुट्टिमपतत्प्रतिविम्वच्छद्मनात्मानमपि द्विधेव पाटयन्तम्, अरिशिरश्छेदलग्नैः कचैरिव किरणैः करालितधारम्, मुहुर्मुहुस्तडिदुन्मेषतरलैः प्रभाचक्रच्छुरितैर्जर्जरितातपम्, खण्डश छिन्दितमिव दिवसम्, कटाक्षमिव कालरात्रेः, कर्णोत्पलमिव कालस्य, ओकारं क्रोधस्य, अलङ्कारमहङ्कारस्य, कुलमित्रं कोपस्य, दोहदं दर्पस्य, सुसहायं साहसस्य, अमात्यं मृत्योः, आगमनमार्गं लक्ष्म्याः, निर्गमनमार्गं कीर्त्तेः, कृपाणं दृष्ट्वा मुमोद ॥

[ हर्षचरिते तृतीयोच्छ्वासे ।]

विद्धि मां नारायणोरःस्थलीलीलाविहारहरिणीम्, पृथुभरतभगीरथादिराजवंशजयपताकाम्, सुभटभुजजयस्तम्भविलासशालभञ्जिकाम्, रणरुधिरतरङ्गिणीतरङ्गक्रीडादोहददुर्ललितराजहंसीम्, सितनृपच्छत्रषण्डशिखण्डिनीम्, अतिनिशितशस्त्रधारावनभ्रमणविभ्रमसिंहीम्, असिधाराजलकमलिनीं श्रियम् अद्राक्षीत्[2] ॥

[हर्षचरिते तृतीयोच्छ्वासे ।]

गृहीतहृदया लक्ष्मीरिव लोकगुरो, स्फुरत्तरलतारका रोहिणीव कलावतः, सर्वजनजननी बुद्धिरिव प्रजापतेः, महाभूभृत्कुलोद्गता गङ्गेव वाहिनीनायकस्य, मानसानुवर्तनचतुरा हंसीव राजहंसस्य, सकललोकार्चितचरणा त्रयीव धर्मस्य, दिवानिशममुक्तपार्श्वस्थिति-

१ अत पर पत्रे नष्टे हर्षचरितादुद्धृतम् ।

२ अय शब्दो वस्तुत पूर्वस्मिन् वाक्ये 'स्त्रियम्' इति शब्देन सवद्ध ।

रुन्धतीव महामुने, हंसमयीव गतिषु, परपुष्टमयीवालापेषु, चक्रवाकीमयीव पतिप्रेम्णि, प्रावृण्मयीव पयोधरोन्नतौ, मदिरामयीव विलासेषु, निधिमयीवार्थसञ्चयेषु, वसुधारामयीव प्रसाददानेषु, कमलमयीव कोशसङ्ग्रहेषु, कुसुममयीव फलदानेषु, सन्ध्यामयीव वन्दने, चन्द्रमयीव निरुपमत्वे, दर्पणमयीव प्रतिपाणिग्रहणेषु, सामुद्रमयीव परचित्तज्ञानेषु, परमात्ममयीव व्याप्तिषु, स्मृतिमयीव पुण्यवृत्तिषु, मधुमयीव संभाषणेषु, अमृतमयीव तृप्तिषु, द(धृ)तिमयीव भृत्येषु, निवृ(र्वृ)तिमयीव सखीषु, वेतसमयीव गुरुषु, गोत्रवृद्धिरिव विलासानां, प्रायश्चित्तशुद्धिरिव स्त्रीत्वस्य, आज्ञासिद्धिरिव मकरध्वजस्य, पुण्यानुवृत्तिरिव रूपस्य, दिष्टवृद्धिरिव रते, मनोरथसिद्धिरिव रामणीयकस्य, दैवसंपत्तिरिव लावण्यस्य, वंशोत्पत्तिरिवानुरागस्य, वरप्राप्तिरिव सौभाग्यस्य, उत्पत्तिभूमिरिव कान्तेः, सर्गसमाप्तिरिव सौन्दर्यस्य, आयतिरिव यौवनस्य, अनन्यवृत्तिरिव वैदग्ध्यस्य, नयप्रवृत्तिरिव लक्ष्म्याः, यशःपुष्टिरिव चारित्रस्य, हृदयशुद्धिरिव धर्मस्य, धृतिरिव सौहार्दस्य, रूपपरमाणुसृष्टिरिव प्रजापतेः, शमस्यापि शान्तिरिव, विनयस्यापि विनीतिरिव, आभिजात्यस्याप्यभिजातिरिव, संयमस्यापि संयतिरिव, धैर्यस्य धृतिरिव, [1][विभ्रमस्यापि विश्रान्तिरिव यशोवती नाम महादेवी प्राणानां प्रणयस्य विश्रम्भस्य धर्मस्य सुखस्य च भूमिरभूत् ।

[ हर्षचरिते चतुर्थोच्छ्वासे ।]

[शनैः शनैश्चास्याः सर्वप्रजापुण्यैरिव परिगृहीता भूयोऽप्यापाण्डुतामङ्गयष्टिर्जगाम । गर्भारम्भेण श्यामायमानचारुचूचुकचूलिकौ चक्रवर्तिनः पातुं मुद्रिताविव पयोधरकलशौ बभार [उर स्थलेन] । स्तन्यार्थमाननिहिता दुग्धनदीव दीर्घस्निग्धधवला माधुर्यमभजत दृष्टिः । सकलमङ्गलगणाधिष्ठितगात्रायास्तस्या इव गतिरमन्दायत । मन्दं मन्दं सञ्चरन्त्या निर्मल[मणि]कुट्टिमनिमग्नप्रतिबिम्बनिभेन गृहीतपादपल्लवा पूर्वसेवामिवारेभे पृथिव्यस्याः । दिवसमपि रत्नापानाया शयनीयमपाश्रयपत्रभङ्गपुत्रिकाप्रतिमा विमलकपोलोदरगता प्रसवसमयं प्रतिपालयन्ती लक्ष्मीरिवालक्ष्यत । क्षपासु सौधशिखराभ्यासगताया गर्भाम्भोमुक्ताशुक्ते स्तनमण्डले संक्रान्तमुडुपतिबिम्बमस्युपरि गर्भस्य श्वेतातपत्रमिव केनापि धार्यमाणमदृश्यत । सुप्तया वासभवने चित्रभित्तिचामरग्राहिण्योऽपि चामराणि चालयांचक्रुः । स्वप्नेषु करविधृतकमलिनीपलाशपुटसलिलैश्चतुर्भिरपि दिक्करिभिरक्रियताभिषेकः । प्रतिबुध्यमानायाश्च चन्द्रशालिकाशालभञ्जिकापरिजनो[ऽपि] जयशब्दमसकृदजनयत् । परिजनाह्वानेष्वाशिरस्यशरीरा वाचो निश्चेरुः । क्रीडायामपि नासहताज्ञाभङ्गम् । अपि च चतुर्णामपि महार्णवानामेकीकृतेनाम्भसा स्नातुं वाञ्छा बभूव । वेला[वन]लतागृहोदरपुलिन-

---

[1] अतः परं पत्रे नष्टे हर्षचरितादुद्धृतानि पदानि ।

परिसरेषु पर्यटितुं हृदयमभिल]लाष । आत्ययिकेष्वपि कार्येषु सविभ्रमं भ्रूलता चचाल । संनिहितेष्वपि मणिदर्पणेषु मुखमुत्खाते खड्गपट्टे वीक्षितुं व्यसनमासीत् । उत्सारितवीणा· स्त्रीजनविरुद्धा धनुर्ध्वनय श्रुतावसुखायन्त । पुत्रो जात ।[1]

[ हर्षचरिते चतुर्थोच्छ्वासे । ]

अत्रान्तरे स्वयमेवानाध्माता अपि तारमधुरं सर्वे शङ्खा विरेसु· । अताडितोऽपि क्षुभितजलनिधिजलध्वनिधीर जुगुञ्जाभिषेकदुन्दुभि । अनाहतान्यपि मङ्गलतूर्याणि रेणु· । सर्वभुवनाभयघोषणापटह इव दिगन्तरेषु बभ्राम तूर्यप्रतिशब्द· । विधूतकेसरसटाश्च साटोप गृहीतहरितदूर्वापल्लवकवलप्रशस्तैर्मुखपटै समहेषन्त[2] हृष्टा वाजिनः । सलीलमुत्क्षिप्तैर्हस्तपल्लवैर्नृत्यन्त इव श्रवणसुभग जगर्जुर्गजा । अचिराच्चक्रायुधमुत्सर्जन्त्या लक्ष्म्या नि श्वास इव ववौ सुरामोदसुरभिर्दिव्यानिल· । यज्वनां मन्दिरेषु प्रदक्षिणशिखाकला[प]कथितकल्याणा प्रजज्वलुरनिन्धना वैतानवह्नय । भुवस्तलात्तपनीयशृङ्खलाबन्धबन्धुरकलशीकोशा· समुदगमन्महानिधय । प्रहतमङ्गलतूर्यप्रतिशब्दनिभेन दिक्षु दिक्पालैरपि प्रमोदादक्रियतेव दिष्टवृद्धिकलकल । तत्क्षण एव शुक्लवाससो ब्रह्ममुखा· कृतयुगप्रजापतय इव प्रजावृद्धये समुपतस्थिरे द्विजातय । साक्षाद्धर्म इव शान्त्युदकहस्तस्तस्थौ पुर· पुरोधा । पुरातन्य· स्थितय इवादृश्यन्तागता बान्धववृद्धा· । प्रलम्बश्मश्रुजालजटिलाननानि बहलमलपङ्ककलङ्ककालकायानि प्रथमप्रणष्टकलिकालस्य बान्धवकुलानीवाकुलान्यधावन्त मुक्तानि बन्धनवृन्दानि । तत्कालापक्रान्तस्याधर्मस्य शिबिरश्रेणय इवालक्ष्यन्त लोकविलुण्ठिता विपणिवीथ्य· । विलसदुन्मुखवामनकवृन्दवेष्टिता· साक्षाज्जातमातृदेवता इव बहुबालकव्याकुला ननृतुर्वृद्धधात्र्य । प्रावर्तत विगतराजकुलस्थितिरध कृतप्रतीहारावनिरपनीतवेत्रिवेत्रो निर्दोषान्त·पुरप्रवेश समस्वामिपरिजनो निर्विशेषबालवृद्ध समानशिष्टाशिष्टजनो दुर्ज्ञानमत्तामत्तप्रविभागस्तुल्यकुल्युवतिवेश्यालापविलास· । प्रनृत्तसकलकटकजन पुत्रजन्मोत्सवो महान् ।

अपरेद्युरारभ्य सर्वाभ्यो दिग्भ्य स्त्रीराज्यानीवावर्जितानि, असुरविवराणीवापावृतानि, नारायणावरोधनानीव प्रचलितानि, अप्सरसामिव महीमवतीर्णानि कुलानि, परिजनेन पृथुकरण्डपरिगृहीता स्नानीयचूर्णावकीर्णा सुमनस·, स्फटिकशिलाशकलशुक्ल

1 प्रस्तुतप्रसङ्गसूचकानीमानि पदानि ।

२ प्रतौ ‘समयहेषन्त’ इति पाठ ।

३ प्रतौ ‘बन्धनानि वन्दिवृन्दानि’ इति पाठ ।

चण्डिकम्, अन्यत्र शिरोविधृतविलीयमानगुग्गुलविकलनवसेवकानुनीयमानमहाकालम्, अपरत्र निशितशस्त्रीनिकृत्तात्ममांसहोमप्रसक्ताप्तवर्गम्, अपरत्र प्रकाशनरपतिकुमारकक्रियमाणमहामांसविक्रयप्रक्रमम्, उपहृतमिव श्मशानपांशुभिरमङ्गलैरिव परिगृहीतम्, यातुधानैरिव विध्वस्तम्, कलिकालेनेव कवलितम्, पापपटलैरिवाच्छादितम्, अधर्मविक्षेपैरिव लुण्ठितम्, अनित्यताधिकारैरिवाक्रान्तम्, नियतिविलसितैरिवाद्री(त्मी)कृतम्, शून्यमिव सुप्तमिव मूर्च्छितमिव छलित[मिव] मुषितमिव विलक्षितमिव स्कन्धावारमाससाद ।

प्रविशन्नेव च विपणिवर्त्मनि कुतूहलाकुलबहुबालकपरीतमूर्ध्वयष्टिविष्कम्भवितते वामहस्तवर्तिनि भीषणमहिषाधिरूढप्रेतनाथसनाथे चित्रवति पट्टे परलोकव्यतिकरमितरकरकलितेन शरकाण्डेन कथयन्त यमपटि(ट्टि)क ददर्श । तेनैव गीयमानं श्लोकमशृणोत्—

मातापितृसहस्राणि पुत्रदारशतानि च ।
युगे युगे व्यतीतानि कस्य ते कस्य वा भवान् ॥ ७१ ॥ इति ।

तेन चाधिकतरमवदीर्यमाणहृदय क्रमेण राजद्वारं प्रतिषिद्धसकललोकप्रवेशं ययौ । अवतीर्णश्चाभ्यन्तरान्निष्क्रामन्तमप्रसन्नमुखरागमुन्मुक्तमिवेन्द्रियैः **सुषेण**नामानं वैद्यकुमारमद्राक्षीत् । कृतनमस्कारं च तमप्राक्षीत् – 'सुषेण, अस्ति तातस्य विशेषो न वा' इति । सोऽब्रवीत्—'नास्तीदानीं यदि भवेत् कुमार दृष्ट्वा' इति । मन्दं मन्दं द्वारपालै· प्रणम्यमानश्च दीयमानसर्वस्वम्, पूज्यमानकुलदेवतम्, प्रारब्धामृतचरुक्रियम्, क्रियमाणषडाहुतिहोमम्, हूयमानपृषदाज्यलवलिप्तप्रचलद्दूर्वापल्लवम्, पठ्यमानमहामायूरिक प्रवर्तमानग्रहशान्ति निवर्तमानभूतरक्षाबलिविधानम्, प्रयतविप्रप्रस्तुतसंहिताजपं जप्यमानरुद्रैकादशीशब्दायमानशिवगृहम्, अतिशुचिनरसंपाद्यमानविरूपाक्षक्षीरकलशसहस्रस्नपनम्, अजिरोपविष्टैश्चानासादितस्वामिदर्शनदूयमानमानसैरभ्यन्तरनिष्पतितनिकटपरिजननिवेद्यमानवार्तैर्वार्तीभूतस्नानभोजनपानशयनैरुज्झितात्मसंस्कारमलिनवेषैर्लिखितैरिव निश्चलैर्नरपतिभिर्नीयमाननक्तदिवम्, दु·खदीनवदनेन च प्रघणेषु बद्धमण्डलेनोपांशुव्याहृतं केनचिच्चिकित्सकदोषानुद्घोषयता, केनचिदसाध्यव्याधिलक्षणपदानि पठता, केनचिद्दु स्वप्नान्यावेदयता, केनचित्पिशाचवार्तां विवृण्वता, केनचित्कार्तान्तिकादेशान् प्रकाशयता, केनचिदुपलिङ्गानि गायता, अन्येनानित्यता भावयता, संसार चापवदता, कलिकालविलसितानि च निन्दता, दैव चोपलभमानेनान्येन धर्माय कुप्यता, अन्येन राजकुलदेवताश्चाधिक्षिपता, अपरेण क्लिष्टकुलपुत्रकभाग्यानि गर्हयता, बाह्यपरिजनेन कथ्यमानपार्थिवावस्थ राजकुलं विवेश ।

मानं लोकान्तरप्रस्थितम्, स्थास्नुना स्वयशसेव चन्दनानुलेपनच्छलेनापृच्छ्यमानम्, अविच्छिन्नदीयमानकमलकुमुदेन्दीवरदलम्, कालकटाक्षपतनशबलमिव शरीरमुद्वहन्तम्, निविडदुकूलपट्टनिपीडितकेशान्तकथ्यमानकष्टवेदनानुबन्धं मूर्धानं धारयन्तम्, दुर्धरवेदनोन्नमन्नीलशिराजालककरालेन च कालाङ्गुलिलिख्यमानलेखाख्यातमरणावधिदिवसमख्यानेन ललाटफलकेन भयमुपजनयन्तम्, आसन्नयमदर्शनोद्वेगादिव च किञ्चिदन्तः प्रविष्टतारकम्, शुष्यद्दशनपङ्क्तिप्रसृतधूसरदीधितितरङ्गिणीं मृगतृष्णिकामिवोष्णां निःश्वासपरम्परामुद्वहन्तम्, अत्युष्णनिःश्वासदग्धयेव श्यामायमानया रसनया निवेद्यमानदारुणसंनिपातारम्भम्, उरःस्थलस्थापितमणिमौक्तिकहारचन्दनचन्द्रकान्तम्, कृतान्तदूतदर्शनयोग्यमिवात्मानं कुर्वाणम्, अङ्गभङ्गवलनोत्क्षिप्तभुजयुगलम्, पर्यन्तहस्तनखमयूखैर्धारागृहमिव तापशान्तये रचयन्तम्, नेदिष्ठसलिलमणिकुट्टिमोदरेषु निपतद्भिः प्रतिबिम्बैरपि संतापातिशयमिव कथयन्तम्, स्पृशन्तीं प्रणयिनीमिव विश्वासभूमिं मूर्च्छामपि बहुमन्यमानम्, अन्तकाह्वानाक्षरैरिव च सभयभिषग्दृष्टैररिष्टैराविष्टम्, महाप्रस्थानकाले स्वसंतापमाप्तहृदयेषु संचारयन्तम्, अरतिप्रतिगृहीतमीर्ष्ययेव छायया मुच्यमानम्, उद्योगमिवोपद्रवाणाम्, सर्वाश्रमोक्षमिव क्षामतायाः, हस्तीकृतं विहस्ततया, विषयीकृतं वैषम्येण, कक्षीकृतं क्षयेण, गोचरीकृतं ग्लान्या, दग्धं दुःखासिकया, आत्मीकृतमस्वास्थ्येन, विध(धे)यीकृतं व्याधिना, क्रोडीकृतं कालेन, लक्ष्यीकृतं दक्षिणाशया, पीतमिव पीडाभिः, जग्धमिव जागरेण, निगीर्णमिव वैवर्ण्येन, ग्रासीकृतमिव गात्रभङ्गेण, ह्रियमाणमिव विपद्भिः, वण्टयमानमिव वेदनाभिः, लुण्ठ्यमानमिव दुःखैः, आदित्सितं दैवेन, निरूपितं नियत्या, आत्तमनित्यत्वेन, अभिभूयमानमभावेन, परिकल्पितं परासुतया, दत्तावकाशं क्लेशस्य, वसतिमिव वैमनस्यस्य, [समीपे कालस्य,] अन्तिकेऽन्त्योच्छ्वासस्य, मुखे महाप्रयासस्य, द्वारि दीर्घनिद्रायाः, जिह्वाग्रे जीवितेशस्य वर्तमानम्, विरले वचसि, चलिते तेजसि, विक्लवे चेतसि, विवशे चक्षुषि, विह्वले वपुषि, क्षीणमायुषि, प्रचुरे प्रलापे, संततश्वसिते, जिते जृम्भिकाभिः, पराधीनमाधिभिः, अनुबद्धमनुबन्धिकाभिः, पार्श्वोपविष्टयानवरतरोदनोच्छूननयनया गृहीतचामरिकयापि निःश्वसितैरेव वीजयन्त्या विविधौषधिधूलिधूसरशरीरया मुहुर्मुहुः 'आर्यपुत्र स्वपिषि' इति व्याहरन्त्या देव्या यशोमत्या शिरसि वक्षसि च स्पृश्यमानं पितरमद्राक्षीत् ।

[हर्षचरिते पञ्चमोच्छ्वासे ।]

क्रमेण च समीपमुपगतः शुश्राव लतावनान्तरितस्य मुमूर्षोर्महतः स्त्रैणस्य तत्कालोचितानेकप्रकारानालापान् । तथाहि— 'भगवन् धर्म, धाव शीघ्रम् । क्वासि कुल-

चामरग्राहिणि, गृहाण पुनरपि कठिनं कण्ठे । मर्पयितव्यानि नर्मदे, नर्मनिर्मितानि निर्मर्यादहसितानि । भद्रे सुभद्रे, भद्रमस्तु ते परलोकगमनम् । अग्रामीणगुणग्रामानुरागिणि ग्रामिके,[1] गच्छ सुगतिम् । वसन्तिके, अन्तिक[2] प्रयच्छ । आपृच्छते छत्रधारी देवि, देहि दृष्टिम् । डृष्टा तव जहाति जीवित विजयसेना । सेयमतिमुक्तिका मुक्तकण्ठमारटति निकटे नाटकसूत्रधारी । पादयो पतति ते ताम्बूलवाहिनी वहुमती-(ता) राजपुत्रि पत्रलतिका । कलिङ्गसेने, अयमपश्चिम परिष्वङ्ग । पीडय निर्भरमुरसा माम् । असव प्रवसन्ति, वसन्तसेने । मञ्जुलिके, मार्जयसि कतिकृत्व सुदु.सहदु खसहस्रास्रदिग्धं दग्धचक्षुरिदम्, रोदिपि कियदाश्लिष्य माम् । निर्माणमीदृश प्रायशो यशोधने । धीरयस्यद्यापि किं माम्, माधवि । क्वेयमवस्था स्थापनानाम् । गत स काल कालिन्दि, सखीजनानुनयाञ्जलीनाम् । उन्मत्तिके मत्तवालिके,[3] कृता पृष्ठत प्रणयिनीप्रति(णि)पातानुरोधा । शिथिलय चकोरवति, चरणग्रहणं ग्रा(ग्र)हिणि । कमलिनि, किमनेन पुन पुनर्दैवोपालम्भेन । न प्राप्त [चिर] सखीजनसङ्गमसुखम् । आर्ये महत्तरिके तरङ्गसेने, नमस्कारः । सखि सौदामिनि, दृष्टासि । समुपनय हव्यवाहनार्चनकुसुमानि, कुमुदिके । देहि चितारोहणाय रोहिणि, हस्तावलम्बनम् । अम्ब धात्रि, धीरा भव । भवन्त्येवंविधा कर्मविपाका' पापकारिणीनाम् । आर्यपादरजसामयमञ्जलि । पर परलोक[प्रयाण]प्रमाणोऽयं मात । मरणसमये कस्माल्लवलिके, हलहलको बलीयानानन्दमयो हृदयस्य [मे] । परिहृष्यन्त्युच्चरोमाञ्चमुञ्चि किमङ्गीकृत्याङ्गानि । वामनिके, वामेन मे स्फुरितमक्ष्णा । वृथा विरमसि वयस्य वायस, वृक्षे क्षीरिणि क्षणे क्षणे क्षीणपुण्याया पुर । हरिणि, हेषितमिव हयानामुत्तरत । कस्येदमातपत्रमुच्चमत्र पादपान्तरेण, प्रभावति, विभाव्यते । कुरङ्गिके, केन सुगृहीतनाम्नो नाम गृहीतममृतमयमार्यस्य । देवि, दिष्ट्या वर्धसे देवस्य हर्षस्यागमनमहोत्सवेन' इति ।

[ हर्षचरितेऽष्टमोच्छ्वासे । ]

अथ गलति तृतीये यामे सुप्तसकलसत्त्वनि शब्दे दिक्कुञ्जरजृम्भमाणगम्भीरध्वनिरताड्यत प्रयाणपटह । अग्रत स्थित्वा च मुहूर्तमिव पुन पुन प्रयाणक्रोशसंख्याख्यापका. स्पष्टमष्टावदीयन्त प्रहारा पटहे पटीयास । ततो रटत्पटहे, नन्दन्नान्दीके,

---

१ हर्षचरिते 'ग्रामेयिके' इति पाठ ।

२ हर्षचरिते 'अन्तरं' इति पाठ ।

३ हर्षचरिते 'मत्तपालिके' इति पाठ ।

चामरग्राहिणि, गृहाण पुनरपि कठिनं कण्ठे । मर्षयितव्यानि नर्मदे, नर्मनिर्मितानि निर्मर्यादहसितानि । भद्रे सुभद्रे, भद्रमस्तु ते परलोकगमनम् । अग्रामीणगुणग्रामानुरागिणि ग्रामिके,[1] गच्छ सुगतिम् । वसन्तिके, अन्तिकं[2] प्रयच्छ । आपृच्छते छत्रधारी देवि, देहि दृष्टिम् । इष्टा तव जहाति जीवितं विजयसेना । सेयमतिमुक्तिका मुक्तकण्ठमारटति निकटे नाटकसूत्रधारी । पादयोः पतति ते ताम्बूलवाहिनी बहुमती-(ता) राजपुत्रि पत्रलतिका । कलिङ्गसेने, अयमपश्चिमः परिष्वङ्गः । पीडय निर्भरमुरसा माम् । असवः प्रवसन्ति, वसन्तसेने । मञ्जुलिके, मार्जयसि कतिकृत्वः सुदुःसहदुःखसहस्रास्रदिग्धं दग्धचक्षुरिदम्, रोदिषि कियदाश्लिष्य माम् । निर्माणमीदृशं प्रायशो यशोधने । धीरयस्यद्यापि किं माम्, माधवि । केयमवस्था स्थापनानाम् । गतः स कालः कालिन्दि, सखीजनानुनयाञ्जलीनाम् । उन्मत्तिके मत्तबालिके,[3] कृताः पृष्ठतः प्रणयिनीप्रति(णि)पातानुरोधा । शिथिलय चकोरवति, चरणग्रहणं ग्रा(ग्र)हिणि । कमलिनि, किमनेन पुनः पुनर्दैवोपालम्भेन । न प्राप्तं [चिरं] सखीजनसङ्गमसुखम् । आर्ये महत्तरिके तरङ्गसेने, नमस्कारः । सखि सौदामिनि, दृष्टासि । समुपनय हव्यवाहनार्चनकुसुमानि, कुमुदिके । देहि चितारोहणाय रोहिणि, हस्तावलम्बनम् । अम्ब धात्रि, धीरा भव । भवन्त्येवंविधाः कर्मविपाकाः पापकारिणीनाम् । आर्यपादरजसामयमञ्जलिः । परः परलोक[प्रयाण]प्रमाणोऽय मातः । मरणसमये कस्माल्लवलिके, हलहलको बलीयानानन्दमयो हृदयस्य [मे] । परिहृष्यन्त्युच्चरोमाञ्चमुञ्चि किमङ्गीकृत्याङ्गानि । वामनिके, वामेन मे स्फुरितमक्ष्णा । वृथा विरमसि वयस्य वायस, वृक्षे क्षीरिणि क्षणे क्षणे क्षीणपुण्यायाः पुरः । हरिणि, हेषितमिव हयानामुत्तरतः । कस्येदमातपत्रमुच्चमत्र पादपान्तरेण, प्रभावति, विभाव्यते । कुरङ्गिके, केन सुगृहीतनाम्नो नाम गृहीतममृतमयमार्यस्य । देवि, दिष्ट्या वर्धसे देवस्य हर्षस्यागमनमहोत्सवेन' इति ।

[ **हर्षचरिते**ऽष्टमोच्छ्वासे । ]

अथ गलति तृतीये यामे सुप्तसकलसत्त्वनिःशब्दे दिक्कुञ्जरजृम्भमाणगम्भीरध्वनिरताड्यत प्रयाणपटहः । अग्रतः स्थित्वा च मुहूर्तमिव पुनः पुनः प्रयाणक्रोशसंख्याख्यापकाः स्पष्टमष्टावदीयन्त प्रहाराः पटहे पटीयांसः । ततो रटत्पटहे, नन्दन्नान्दीके,

---

१ **हर्षचरिते** 'ग्रामेयिके' इति पाठः ।

२ **हर्षचरिते** 'अन्तरं' इति पाठः ।

३ **हर्षचरिते** 'मत्तपालिके' इति पाठः ।

निश्चलाश्मनसुखायमानखक्खटक्षत्रियस्तूयमानटङ्कणगुणे, स्रस्तवेसरविसवादसीदद्दाक्षिणात्यसादिनि, रजोजग्धजगति, प्रयाणसमये, प्रतिदिग्गमागच्छद्भिर्गजवधूसमारूढैराधोरणैरूर्ध्वध्रियमाणहेमपत्रभङ्गसारशार्ङ्गैः, अन्तरासनासीनान्तरङ्गगृहीतासिभिः, ताम्बूलिकविधूयमानचामरपल्लवैः, पश्चिमासनिकापितभस्त्राभरणभिन्दिपालपूलकैः, पत्रलताकुटिलकलधौतनलकपल्लवितपर्याणैः, पर्याणपक्षपरिक्षेपिपट्टिकाबन्धनिश्चलपट्टोपधानस्थिरावधानैः, प्रचलपादफलिकास्फालनस्फायमानपदबन्धमणिशिलाशब्दैः, उच्चित्रनेत्रसुकुमारस्वस्थगगनस्थगितजङ्घाकाण्डैश्च कार्दमिकपट्टकल्माषितपिशङ्गि[ङ्ग]पिङ्गैश्च अलिनीलमसृणसतुलासमुत्पादितसितसमायोगपरभागैश्च अवदातदेहविराजमानराजपट्टमेचकैः, कञ्चुकैश्च उपचितचीनचोलकैश्च तारमुक्तास्तबकितस्तवरकवारबाणैश्च नानाकषायकर्वुरकूर्पासकैश्च शुकपिच्छच्छायाच्छादनैश्च व्यायामोल्लुप्तपार्श्वप्रदेशविशच्चारुशस्त्रबन्धप्रविभक्तत्रिकैश्च, गतिवशवेल्लितहारलतालग्नलोलकुण्डलोन्मोचनप्रधावितपरिजनैश्च, चामीकरपत्राङ्कुरकर्णपूरविघट्टमानवाचालबालपाशैश्च उष्णीषपट्टावष्टब्धकर्णोत्पलनालैश्च कुङ्कुमरागकोमलोत्तरीयान्तरितोत्तमाङ्गैश्च चूडामणिखण्डखचितक्षौमचोलैश्च मायूरातपत्रायमाणशेखरषट्पदपटलैश्च मार्गागतशारिकाशारिवाहवेगदण्डैश्च पुरश्चञ्चच्चामरकिर्मीरकार्दरङ्गचर्ममण्डलमण्डनोड्डीयमानडामरचटुलचारभटभरितभुवनान्तरालैः, आस्कन्दत्काम्बोजवाजिशतैः[शिञ्जानजातरूपायानरवमुखरितदिङ्मुखैश्च निर्दयप्रहतलम्बापटहशतपटुरववधिरीकृतश्रवणविवरैः, उद्घोष्यमाणनामभिः, उन्मुखपादातप्रतिपाल्यमानाज्ञापातैः राजभिरापुपूरे राजद्वारम् ।

उदिते च भगवति दिनकृति राज्ञः समायोगग्रहणसमयशंसी सस्वान सज्ञाशङ्खो मुहुर्मुहुः । अथ नचिरादिव प्रथमप्रयाण एव द्विग्विजयाय दिग्गजसमागममिव गमनविलोलकर्णतालदोलाविलासैः कुर्वाणया करेणुकयोह्यमानः, वैदूर्यदण्डविकटेनोपरि प्रत्युप्तपद्मरागखण्डखचिततया सूर्योदयदर्शनकोपादिव लोहितायतया ध्रियमाणेन मङ्गलातपत्रेण कदलीगर्भाभ्यधिकम्रदिम्ना नवनेत्रनिर्मितेन द्वितीय इव भोगिनामधिपतिरङ्गलग्नेन कञ्चुकेनामृतमथनदिवस इव क्षीरोदफेनपटलधवलाम्बरवाही, बाल एव पारिजातपादप इवाखण्डलभूमिमारूढः, विधूयमानचामरमरुद्विधूतकर्णपूरकुसुममञ्जरीरजसा सकलभुवनवशीकरणचूर्णेनेव दिशश्छुरयन्नभिमुखचूडामणिघटमानपाटलप्रतिबिम्बमुदयमानं सवितारमपि पिबन्निव तेजसा बहलताम्बूलसिन्दूरच्छुरितया विलभमान इव द्वीपान्तराण्योष्ठमुद्रयानुरागस्य स्फुरन्महाहारमरीचिचक्रवालानि चाम-

१ प्रतौ 'शारीरिक' इति पाठः ।

२ अत परं पत्रे नष्टे हर्षचरितादुद्धृतोऽयं सन्दर्भः ।

लयस्येव मेना, दुष्यन्तस्येव शकुन्तला, जितशत्रोरिव विजया, रामस्येव जानकी, नैषधेरिव दवदन्ती इत्यादि ।

उभयपक्षविघातिनी कंसस्येव जीवयशा इत्यादि ।

स द्वाभ्यां प्रियाभ्यां रेजे, पद्मावतीवैराट्याभ्यामिव धरणोरगराजः, सुमङ्गला-सुनन्दाभ्यामिव श्रीनाभेयः, गङ्गागौरीभ्यामिव शङ्कर इत्यादि ।

तिसृभिः प्रियतमाभिः स रेमे—सुमित्रादिभिर्दशरथ इव ।

चतसृभिः स शुशुभे—राजनीतिभिरिव राजा ।

पञ्चभिश्च—समितिभिरिव मुनिः ।

बहुभिः सोऽशोभिष्ट—करेणुभिरिव द्विपः, सुरभिभिरिव गोपतिः, शचीभिरिव विबुधपतिः, गोपीभिरिव माधवः, उरगीभिरिव फणीन्द्रः इत्यादि । भृङ्गी[भि]रिव पद्मम्, ताराभिरिव गगनम्, अश्विनीभिरिव चन्द्रमा इत्यादि ।

तनयोऽस्य बभूव इति—शक्रस्येव जयन्तः, हरस्येव कुमारः, नाभेरिव श्रीऋषभनाथः, चन्द्रस्येव बुधः, रवेरिव शनिः, प्राचीदिश इव रविः ।

तस्या गङ्गाया इव कनककमलम्, विदूरभूमेरिव रत्नम् इत्यादि ।

पुत्री बभूव तस्य—शक्रस्येव जयन्ती, ब्रह्मण इव भारती, सूर्यस्येव यमुना, जनकस्येव जानकी भीमस्येव दवदन्ती, द्रुपदस्येव द्रौपदी इत्यादि ।

द्वौ पुत्रौ तस्य जातौ—अश्विनीकुमाराविव, भुजाविव, नयने इव, नयधर्माविव ।

चत्वारः पुत्रास्तस्य बभूवुः—श्रीपतेरिव भुजाः, धर्मस्येव दानाद्या इत्यादि ।

नगरम्—राजगृहमिव श्रियः, प्रतिच्छन्दः इव स्वर्गपुरस्य, प्रतिमानमिव गजपुरस्य, नगरीश्रिया भोगवती पुरी द्वैराज्यमिव अलकायाः, प्रतिनिधिरिव लङ्काया इत्यादि ।

मन्त्री—द्वितीय इवाभयकुमारः, मूर्तिमानिव चाणक्यः, प्रतिकृतिर्बृहस्पतेः, चतुर्विबुधद्विरत्नरत्नाकरः, करकमलकलितनीतिपुस्तकः, राजार्थकर्ता, हर्ता विपदाम् ।

पुरोहितः—सुरगुरुरिव बुद्ध्या, अष्टादशपुराणपारावारपारीणः आश्रयो विद्यानाम्, निवासो धर्माणाम्, यागविधिज्ञः, प्राज्ञः, दर्वीकरः, कुशकलितपाणिः, शान्त्यादिकर्मनिरतः, विरतः शूद्रदानेभ्यः ।

गजः—साक्षादैरावत इव सप्ताङ्गप्रतिष्ठितः, माणिक्यदण्डोत्पन्नः, समरसागर-तारणतरण्डः, करण्डः शौर्यरत्नानाम्, जिजिगिगिधिधि इत्यादिवाक्यशिक्षितसर्वक्रियः ।

तुरग—साक्षाद् रक्त इव उच्चैःश्रवा इव, दिनकरतुरग इव, शुभावर्त्त-विभर्मितो दशावर्त्तपूतः ।

निर्मासं मुखमण्डले परिणतं मध्ये लघुं कर्णयोः
स्कन्धे बन्धुरमप्रमाणमुरसि स्निग्धं च रोमोद्गमे ।
पीनं पश्चिमपार्श्वयोः पृथुतरं पृष्ठे प्रधानं जवे
राजा वाजिनमारुरोह सकलैर्युक्तं प्रशस्तैर्गुणैः ॥७२॥

धौरितादयः पञ्चधारा इत्यादि ।

मुनि—भृगुरिव, अत्रिरिव, अङ्गिरा इव, कुत्स इव, कौशिक इव गौतम इव वात्स्यायन इव भारद्वाज इव शाण्डिल्य इव, पौलस्त्य इव, पाराशर इव, अगस्त्य इव लोपामुद्रापतिरिव, व्यास इव, वाल्मीकिरिव, नारद इव, दुर्वासा इव याज्ञवल्क्य इव, सप्तमहर्षय इव दक्ष इव, प्रजापतिरिव धर्मेण भावनया क्षान्त्या विवेकेन परमार्थतया तत्त्वज्ञा तत्त्वज्ञानेन उपनिषदा इत्यादि ।

श्रीगौतम इव लब्ध्या श्रीसुधर्मेव सन्तानवृद्धया, रूपेण वज्रस्वामीव शीलेन स्थूलभद्र इव, क्षान्त्या दृढप्रहारीरिव, प्रभावनया वज्रस्वामीव, प्रत्नकरणेन शय्यम्भव इव श्रीपुण्डरीक इव तीर्थकरणेन जिनशासनप्रभावनया विष्णुकुमार इव सनत्कुमार इव राज्यत्यागेन, भावनया इलातीपुत्र इव निश्रसीपुत्र इव तपसा श्रीदृढप्रहारीरिव उपसर्गसहनेन गजसुकुमाल इव, अवन्तीसुकुमाल इव क्रोधत्यागेन स्कन्दकाचार्य-शिष्यगण इव, मानेन बाहुबलिरिव मायया पीठ इव, लोभजयेन कपिलमहर्षिरिव इत्यादि ।

सर्वोपमा— मर्यादया वारिधिरिव गाम्भीर्येण वा श्लेषेण नदीनतया पात्रा धारत्वेन वा रत्नोत्पत्त्या वा कल्याणवत्तया मेरुरिव विबुधसेव्यत्वेन वा विशाल-तया वा चन्द्र इव कलावत्तया सुवृत्तेन वा तमोध्वंसेन वा । सिंह इव पराक्र-मेण श्लेषेण सत्त्वगोत्रपरिचर्यया वा पूर्णप्रमत्वेन वा कुरङ्गहननेन वेति । पद्म इव श्रीनिवासत्वेन चित्रे कण्टकोच्छेदपरत्वेन पद्मशब्द पुं-नपुंसकः । हर इव वृषभा सितत्वेन संहारेण वा । गजपतिरिव दानेन । क्षेत्रमिव बहुधा न्यायसंयोगेन । क्षेत्रं म(गे)णया गुणबीजानाम् । आकरः प्रज्ञारत्नानाम् । निलयः सर्वविद्या नाम इति । यन्त्र इव धनेन यम इव वैरिणाम्, सूर इव दोषादयध्वंसेन, घन इव

१ प्रती ह 'अवन्तीसुकुमाल' इति पाठः ।

संतापव्यपोहेन, वायुरिव प्राणदानेन, जिन इव गतरागत्वेन, इन्द्र इव पूर्वस्थितिपालनेन।

गौः—कामगौरिव सुदोह्या कुण्डोघ्नी।

वृषः—सुसत्त्वेन कैलासशिखरीव, सुवर्णकिङ्किणीक्वाणभासुरः राजेव, शृङ्गाभ्यां नयपालनाभ्याम्।

सौध—विमानमिव स्वर्गखण्डमिव वलावलध्वजाञ्चलं सुवर्णपञ्चालिकामनोहरं रजतोत्तानपट्टम्।

चन्द्रः—पुण्डरीकमिव कामदेवमहीभुजः १, डिण्डिरपिण्ड इव रागवारिधेः २, रुचिरसुवृत्तमुखमिव जिनेश्वरस्य ३, वैराग्यमिव नीलविलोचनायाः ४, साक्षात्कीर्त्तिप्राग्भार इव यामिन्याः ५, कुञ्चिकेव नयनकैरवस्य ६, पीयूषाग्रयणमिव दृशाम् ७, निधानमिव प्रीतेः ८, आधानमिव धृतेः ९, बीजमिव स्मृतिभुवः १०, सुधाकुण्डमिव देवानाम् ११, इत्यादि।

रविः—प्रदीप इव कमलजागरणस्य १, उद्घाटनकुञ्चिकेव देवतायतनानाम् २, कुलागारमिव मुदाम् ३, उच्चाटनयन्त्रमिव तमसाम् ४, साधुरिव सत्यार्थदर्शनः ५, प्रीतिपात्रमिव कोकानाम् ६, शासनमिवोद्यमस्य ७, मूलस्तम्भमिव दिवसमहाप्रासादस्य ८, बीजमिव दिनलतायाः ९, प्रतिष्ठानमिव दिनपोतस्य १०, इत्यादि।

इन्द्रनीलशिलाबद्धमिव १, यमुनाजलपूरितमिव २, अञ्जनखचितमिव ३, नीलीरसपूरितमिव ४, अन्धकारपूरितं भुवनं बभौ।

मृगमदपुनरुक्तं दन्तिदानानुवादो
मरकतमणिवीप्सा भृङ्गचेक्रीयितार्थः।
श्वयथुमुपदधानं स्म(स्मा)रनीलोत्पलानां
यमकितयमुनाम्भो ध्वान्तमभ्येति भूयः ॥७२॥

कुरुविन्दकन्दलैरिव कश्मीरजकेशरैरिव व्याप्तम्।
बन्धूकप्रकरैरिव भुवनतलं भाति शशिकिरणैः ॥७३॥

प्रधानोपमासमुच्चयः यथा—दोहदेन पादपः १, मदेन द्विपः २, वेगेन वाजी ३, अलङ्कारेण काव्यम् ४, चैत्येन पुरम् ५, प्रतापेन नरेन्द्रः ६, शीलेन मुनिः ७, गाम्भीर्येण वारानिधिः ८, रविणेव दिनम् ९, चन्द्रेण विभावरी १०, सत्येन वचनम्

लोह मोहजिगीपयेव कलयन् सर्वाङ्गमङ्गे मल
श्रो(स्रो)तोचन्धनशृङ्खला इव गिरा बिभ्रत् तपस्वी स्फुटम् ॥७४॥

साक्षादिव जिनधर्मः, मूर्तिमानिव क्षमाभर, अङ्गीवार्हद्धर्म, भाजनमिव शमस्य, निधानमिव वा शेवधे(धि)रिव वा, आश्रय इव शुभानाम्, क्षेत्रमिव श्लोकबीजानाम्, उत्पत्तिरिव पुण्यानाम्, पञ्चसमितिसंपन्न, त्रिगुप्तिगुप्त, एकविधसंयमरत, द्विध्यानविवर्जित, त्रिदण्डरहित, चतु कषायजयी, पञ्चेन्द्रियनिग्रहपर', पट्जीवनिकायवत्सल, सप्तभीतिविनिर्मुक्त, अष्टमदस्थानरहित, नवब्रह्मचर्यगुप्त, दशविधसाधुधर्मसुस्थितमना, एकादशाङ्गवित्, द्वादशप्रतिमाविधिज्ञ, त्रयोदशक्रियास्थानवेदी, जीवचतुर्दशकज्ञ इत्यादि ।

कोपे उपमानानि—दुर्वासा महर्षिरिव, चण्डरुद्राचार्य इव, चण्डकौशिक इव, स्कन्दकाचार्य इव, अच्चकारितभट्टिकेव, कुभार्याया' कपिकच्छुफलमिव, गोक्षुरकगण्डोपधानमिव, अग्निशिखेव, खदिराङ्गारशकटीव इत्यादि ।

हीनोपमा— शुनीव गृहदेवीव खद्योतो भानुमानिव, इत्यादि ।

अधिकोपमा यथा— पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ, इत्यादि ।

लौकिकी उपमा यथा—

स्थित' स्थितामुच्चलित प्रयातां
निषेदुषीमासनबन्धधीर' ।
जलाभिलाषी जलमाददानां
छायेव तां भूपतिरन्वगच्छत् ॥ ७५ ॥

[ रघुवंश, सर्ग २, श्लोक ६ ]

कविप्रौढोक्तिमात्रनिष्पन्नोपमा यथा—घण्टामाघ', छत्रभारवि', दीपिकाकालिदास, यमुनात्रिविक्रम', धनपालारघट्ट इत्यादि ।

स्वदर्शनोपमा यथा—भावनया भरत सिद्ध, मृगावती देवकी सुज्येष्ठा चेल्लणा धारिणी सुभद्रा कलावती रत्नमाला जयमालेत्यादि शीलेन ।

परदर्शनोपमा—शीले यथारुन्धती सीतेत्यादि ।

अनन्वयोपमा—जिनो जिन इव । रामरावणयोर्युद्धं रामरावणयोरिव । सागर' सागरोपम । विषं विषमिवेत्यादि ।

इत्याद्युपमाप्रपञ्चोऽलङ्कारशास्त्रादवसेयः ।

गज म्रियन्ते वीरा , बध्यन्ते भाले रणपट्टा , पूज्यन्तेऽस्त्रदेवता ।

अस्त्राण्यमूनि—

खड्ग कुन्तल-भल्ल-गोफण-धनु कुन्त फरी मुद्गरो
नाराच पतमाल-पाश-शफरी मुष्टिर्गदा-टिङ्कुली ।
सिन्ध कर्तरि-वज्र-मुष्टि फलक यन्त्र त्रिशूल असं
दण्ड कुण्टि-परश्वधा-कटसला चक्राद्रि-पाशाङ्कुशा ॥ ७६ ॥

लगुडो भिन्दपालश्च हरदं शक्ति-लाकडि ।
यष्टिश्च वहित्र च षट्त्रिंशाच्छस्त्रसंग्रह ॥ ७७ ॥

आयुधानां धनु श्रेष्ठं सिन्धं कुन्तं च मध्यमम् ।
अधमं खड्गमित्याहु छुरिका चाधमाधमा ॥ ७८ ॥

गरुडव्यूह-चक्रव्यूह-पद्मव्यूहरणम् ।

इति लोकव्यवहारं गुरुपदविनयादवाप्य कविसारम् ।
नवनवभणितिविचित्र्यं करोति सुतरां क्षणात् काव्यम् ॥ ७९ ॥

इत्याचार्यश्रीविनयचन्द्रविरचितायां काव्यशिक्षायां
विनयाङ्कायां लोककौशल्यो नाम तृतीय परिच्छेद ॥

# ४. बीजव्यावर्णनपरिच्छेदः।

अथ [जिन]बीजानि—

पिता माता पुरी लक्ष्म वर्ण-कीर्ति-गुणश्रियः ।
प्रातिहार्याणि चाष्टापि देशना शमता सदा ॥ १ ॥

क्रोध-मान माया-लोभ-मद-मोह-पराजयः ।
अष्टादशमहादोषवर्जनं जिनवर्णने ॥ २ ॥

व्याख्या—

**पिता**—नाभिश्च जितशत्रुश्च जितारिरथ संवरः ।
मेघो धरः प्रतिष्ठश्च महासेनो नरेश्वरः ॥ ३ ॥

सुग्रीवश्च दृढरथो विष्णुश्च वसुपूज्यराट् ।
कृतवर्मा सिंहसेनो भानुश्च विश्वसेनराट् ॥ ४ ॥

सूरः सुदर्शनः कुम्भः सुमित्रो विजयस्तथा ।
समुद्रविजयश्चाश्वसेनः सिद्धार्थ एव च ॥ ५ ॥

**माता**—मरुदेवी ईकार-आकारान्त शब्दः ।

मरुदेवा विजया सेना सिद्धार्था च मङ्गला ।
ततः सुसीमा पृथ्वी लक्ष्मणा रामा ततः परम् ॥ ६ ॥

नन्दा विष्णुर्जया श्यामा सुयशा सुव्रताऽचिरा ।
श्रीर्देवी प्रभावती च पद्मा वप्रा शिवा तथा ॥ ७ ॥

वामा त्रिशला क्रमतः पितरो मातरोऽर्हताम् ।

[ अभिधानचिन्तामणि १, ३६–४१ ]

**नगरी**—अयोध्या इत्यादि–विनीता, अयोध्या, श्रावस्ती, अयोध्या, कौशाम्बी, वाणारसी, चन्द्रपुरी, काय(क)न्दी, भद्रिलपुरं, सिंहपुरं, चम्पा, काम्पील्यम्, अयोध्या,

रत्नपुरम्, हस्तिनागपुरं, गजपुर नागपुरं, (मि)थिला, राजगृहं, मिथिलानगरी, शौर्यपुरं, वाणारसी, कुण्डग्राम इति जिनजन्मनगराणि ।

लक्ष्माणि यथा—

वृषो गजोऽश्वः प्लवगः क्रौञ्चोऽब्जं स्वस्तिकः शशी ।
मकरः श्रीवत्सः खड्गी महिषः शूकरस्तथा ॥ ८ ॥

श्येनो वज्रं मृगश्छागो नन्द्यावर्तो घटोऽपि च ।
कूर्मो नीलोत्पलं शङ्खः फणी सिंहोऽर्हतां ध्वजाः ॥ ९ ॥

[ अभिधान० १, ४७–४८ ]

गत्वा हि विस्मितो वृष एवं गजोऽश्व सेवते ।
चन्द्रोऽपि च निष्कलङ्कः जिने लाञ्छनछलना ॥ १० ॥

शशोऽतिधैर्यं चिन्तापिकफलप्रदमालोक्य सिंहोऽपि पराभूत इव यं निषेवते स विभुः पायात् ।

वर्णो यथा—

रक्तौ च पद्मप्रभ-वासुपूज्यौ शुक्लौ च चन्द्रप्रभ-पुष्पदन्तौ ।
कृष्णौ पुनर्नेमि-मुनी विनीलौ श्रीमल्लि-पार्श्वौ कनकत्विषोऽन्ये ॥११॥

कीर्तिः—कीर्तिरुज्ज्वला सुगन्धिर्वर्णनीया श्रीर्वा शोभा सा चातिशयनन्विता । अतिशयाश्चतुस्त्रिंशत् । ते च सिद्धान्तप्रसिद्धा यथा ग्रन्थगौरवभयान्न लिख्यन्ते ।

प्रातिहार्याणि यथा—

रक्ताशोकतरुर्विचित्रसुमनोवृष्टिः सुदिव्यो ध्वनिः
शुभ्रे भास्वरचामरे मणिमयं व्याभासि सिंहासनम् ।
भाचक्रं सुरदुन्दुभिस्फुटरवः छत्रत्रयं राजते
येषां ते विभवस्तु भोऽनघगुणाः पान्त्वात्ममार्गोन्मनाः ॥ १२ ॥

देशना पञ्चत्रिंशद्गुणवती । तद्यथा—

संस्कारवत्त्वमौदात्त्यमुपचारपरीतता ।
मेघगम्भीरघोषत्वं प्रतिनादविधाय(यि)ता ॥ १२ ॥

इत्यादि । [ अभिधान०, १, ६५–७१ ]

**शमता** यथा—

बलं जगद्ध्वंसनरक्षणक्षमं
क्षमा च किं सङ्गमके कृतागसि ।
इतीव सचिन्त्य विमुच्य मानस
रुषेव रोषस्तव नाथ! निर्ययौ ॥ १४ ॥

क्रोधादीना जयो रूपकालङ्कारेण व्यावर्ण्य' स च अग्रे उदाहरिष्यते रूपकविचारे ।

अष्टादश **दोषा** यथा—

अन्तराया दान-लाभ-वीर्य-भोगोपभोगगाः ।
हासो रत्यरती भीतिर्जुगुप्सा शोक एव च ॥ १५ ॥

कामो मिथ्यात्वमज्ञानं निद्रा चाविरतिस्तथा ।
रागो द्वेषश्च नो दोषास्तेषामष्टादशाप्यमी ॥ १६ ॥

[ अभिधान० १, ७२-७३ ]

इदानीं जिनव्यावर्णने क्रियापदानि ।

वन्दे वन्दामहे नौमि स्तवीमि प्रणिदध्महे ।
दद्याद् देयात् सुखं जीया[द्] हरताद् विघ्नपद्धतिम् ॥ १७ ॥

हरन्तु मम पाप्मानं दिशन्तु मम सम्पदम् ।
पातु वोऽवतु मां देव' पापं हरतु व सदा ॥१८॥

स्वामिन् ! जय जयाव त्वं पाहि पाहि स्मर त्रिधा ।
अङ्गीकरोमि सेवेऽहं भक्तित समुपास्महे ॥१९॥

पाप लुनीहि करुणाकर! मां पुनीहि
दोष मुषाण जगदीश! गुणं पुषाण ।
चित्तं प्रबोधय विशोधय दर्शन मे
शील प्रवर्तय निवर्तय कर्मजालम् ॥२०॥

तव प्रेष्योऽस्मि दासोऽस्मि सेवकोऽस्म्यस्मि किङ्कर ।
ओमिति प्रतिपद्यस्व नाथ! नात' पर ब्रूवे ॥२१॥

नमः परपदस्थाय ज्योतीरूपाय तायिने ।
नमोऽस्तु ज्ञानरूपाय मुदितामोदशालिने ॥२२॥

यः परात्मा परं ज्योतिः परमः परमेष्ठिनाम् ।
आदित्यवर्णं तमसः परस्तादामनन्ति यम् ॥२३॥

सर्वे येनोदमूल्यन्त समस्ताः क्लेशपादपाः ।
मूर्ध्ना यस्मै नमस्यन्ति सुरासुरनरेश्वराः ॥२४॥

प्रावर्त्तन्त यतो विद्याः पुरुषार्थ[प्र]साधिकाः ।
यस्य ज्ञानं भवद्भाविभूतभावावभासकृत् ॥२५॥

यस्मिन् विज्ञानमानन्दं ब्रह्म चैकात्मतां गतम् ।
स श्रद्धेयः स च ध्येयः प्रपद्ये शरणं परम् ॥२६॥

तेन स्यां नाथवांस्तस्मै स्पृहयेऽहं समाहितः ।
ततः कृतार्थो भूयासं भवेयं तस्य किङ्करः ॥२७॥

इत्यादि श्रीवीतरागस्तोत्राद् अवगन्तव्या देवस्तुतिः ।

पिता— उपसर्गाः क्षयं यान्ति छिद्यन्ते विघ्नवल्लयः ।
मनः प्रसन्नतामेति पूज्यमाने जिनेश्वरे ॥२८॥

इति पिता ।

श्रीमन्नाभिनरेन्द्रस्य नन्दनो वृजिनं जिनः ।
नीतित्रयीस्थाकन्दो हरतात्पापपस्मरः ॥२९॥

पितुः पदेन पदद्वयम् यथा –

कुलकृन्नन्दनो नाभिः स नाभिः पृथिवीभुजाम् ।
तत्पुत्रो जगतान्नित्यं जिनो मन्तुच्छितावहः ॥३०॥

पितुः पदेन पदत्रयम् यथा –

भूपालमौलिमाणिक्य सिद्धार्थो नाम भूपतिः ।
गुणग्रामकुलस्वामी तस्य पुत्रो जिनोऽस्तु ॥३१॥

माता— मरुदेवीसुगिरगोविदम्भगसगोत्सवम् ।
भाति मे जिननाथान्ता नाभये प्रणिप्रद्यते॥३२॥

पुरी, यथा—

अयोध्यायां जनिर्यस्य० ।

लक्ष्म, यथा—

स पातु वृषभध्वज ० । इत्यादि स्वयमभ्यूह्यम् ।

अभिनौमि जिन ते । जीयासुर्जिना ।

शान्ति वस्तनुतात् । वितर शं शम्भव ।

पालय माम्, तुभ्य नमो, विधेहि सुविधिं सुविधे ।

जयति शत्रु देव । व्यमुचद् राज्य शान्ति. ।

प्रवितनु मल्ले श्रियम् ।

इत्यादि कर्मपदानि ज्ञातव्यानि ।

## कारकशिक्षा

**संप्रदानं** यथा—देवदत्ताय ददात्यर्हन् श्रियम् ।

धर्मो मे रोचते चारु ।

[**अधिकरणे** यथा–] शमे मतिं कारय त्वम् । धर्मे तत्त्वे वासनायां कलिमथने शत्रुपराजये इत्याद्यधिकरणे प्रयोग ।

[**करणे** यथा–] मनसा वाचा कर्मणा धृत्या स्मृत्या भावेन विनयेन मन·शुद्ध्या समाधिना धिया वन्दनेन गुणग्रहणेन स्मरणेन परलोकभयेन वा नमामि ।

किशलयतु कलाना कौशलं चन्द्रमौलि ।

स पातु व कंसरिपोः कृपाणम् । इति करणम् ।

**अपादानं** यथा—पायादपायात् ।

विघ्नभ्यो जिनो विघ्नविनाशक ।

ससारात् त्रायता स्वामी मोहाद रक्षतु तीर्थकृत् । कुगते पातु वो वीर । इत्यादि ।

**संवन्धो** यथा— भविना श्रियमादिशतु विभु प्रणत सुखयतु इत्यादि ।

**संप्रदानं** यथा–नमो देवाय । स्वस्ति प्रजायै ।

इति **कारकशिक्षा** ।

इदानीं **हरवीजानि**–

गङ्गागौर्यौ प्रिये यस्य त्रैलोक्यव्ययकारक ।

विनायक कुमारश्च द्वाविमौ तस्य नन्दनौ ॥२३॥

अथ **मातरः**—ब्रह्माणी सिद्धौ माहेश्वरी कौमारी वैष्णवी वाराही चामुण्डा इति सप्त मातरः । ईश्वरेणेमा' कृता'—

ब्रह्माणी निर्मिता येन भुवनोद्धारकाम्यया ।
जगत्यां स शिव' पायादपायेभ्यो विवेकिन' ॥४०॥

एवं सप्त श्लोका उत्पद्यन्ते, आसां वाहुप्रहरणवाहनवर्णनाभ्य ।

लघिमा वशितेशत्वं प्राकाम्य महिमाणिमा ।
यत्र कामावसायित्वं प्राप्तिरैश्वर्यमष्टधा ॥४१॥

यस्तरति महाम्भोधौ जीर्णपत्रमिवाचिरात् ।
लघिमावर्णने तस्य ब्रह्मापि खलु कातर' ॥४२॥

इत्यष्टौ भवन्ति श्लोका' ।

गङ्गां वन्दे—निर्मोकमुक्तिमिव गगनोरगस्य, लीलाललाटिकामिव त्रिविष्टप[विट]स्य, विक्रयवीथिमिव पुण्यपण्यस्य, दत्तार्गलामिव नरकनगर[द्वार]स्य, अंशुकोष्णीषपट्टिकामिव सुमेरुनृपस्य, दुकूलकदलिकामिव कैलासकुञ्जरस्य, पद्धतिमिवापवर्गस्य, नेमिमिव कृतयुगचक्रस्य, सप्तसागरराजमहिषीं मन्दाकिनीम् ।

[ **हर्षचरिते** प्रथमोच्छ्वासे ]

[युवा—]अनङ्गयुगावतारमिव दर्शयन्तम्, चन्द्रमयीमिव सृष्टिमुत्पादयन्तम्, विलासप्रायमिव जीवलोकं जनयन्तम्, अनुरागमयमिव मार्गान्तरमारचयन्तम्, शृङ्गारमयमिव दिवसमापादयन्तम्, रागराज्यमिव प्रवर्तयन्तम्, आकर्षाञ्जनमिव चक्षुषोः, वशीकरणमन्त्रमिव मनस', स्वस्थावेशचूर्णमिवेन्द्रियाणाम्, असंतोषमिव कौतुकस्य, सिद्धयोगमिव सौभाग्यस्य, पुनर्जन्मदिवसमिव मन्मथस्य, रसायनमिव यौवनस्य, एकराज्यमिव रामणीयकस्य, कीर्तिस्तम्भमिव रूपस्य, मूलकोशमिव लावण्यस्य, पुण्यकर्मपरिणाममिव संसारस्य, प्रथमाङ्कुरमिव कान्तिलताया, सर्गाभ्यास[फल]मिव प्रजापते', प्रतापमिव विभ्रमस्य, यश'प्रवाहमिव वैदग्ध्यस्य, अष्टादशवर्षदेशीयं युवानमद्राक्षीत् ।

[ **हर्षचरिते** प्रथमोच्छ्वासे ]

स्त्री विभाति—पुन' संजीवनौषधिरिव पुष्पधनुष', वेलेव रागसागरस्य, ज्योत्स्नेव यौवनचन्द्रोदयस्य, महानदीव रतिरसामृतस्य, कुसुमोद्गतिरिव सुरततरो',

१ सामान्यतोऽत्र ऐन्द्री दृश्यते, यथा—
माहेन्द्री चैव ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा वाराही चामुण्डा सप्त मातर ॥

नाट्यविद्येव वैदग्ध्यस्य, कौमुदीव कान्तेः, धृतिरिव धैर्यस्य, गुरुशालेव गौरवस्य, बीजभूमिरिव विनयस्य, गोष्ठीव गुणानाम्, मनस्वितेव महानुभावतायाः, सृष्टिरिव तारुण्यस्य ।

[ हर्षचरिते प्रथमोच्छ्वासे ।]

वीतरागदर्शने सखि—स्तम्भितेव मनोरथैः, आकृष्टेव कुतूहलेन, प्रत्युद्गतेवोत्कलिकाभिः आलिङ्गितेवोत्कण्ठया अन्तःप्रवेशितेव हृदयेन, स्नपितेवानन्दाश्रुभिः, विलिप्तेव स्मितेन, व(वा)र्जितेवोच्छ्वसितैः, आच्छादितेव चक्षुषा, अभ्यर्थितेव वदनपुण्डरीकेण, सखीकृतेवाशया ।

[ हर्षचरिते प्रथमोच्छ्वासे ।]

'भवानीपतिः' इति स्तुतौ न कार्यं । यतो भवस्य भार्या भवानी पतिशब्दो योजितः पत्यन्तरे प्रतीतिं जनयति । एवं 'मृडानीपतिः' 'अम्बिकापतिः' इति विरुद्धां धियमुत्पादयति ।

सती शिवा महादेवी भैरवी सर्वमङ्गला । इति गौर्या नामपदानि श्लिष्टानि ।

महासेनो महादेवः 'कुमार' शब्दपूर्वं श्लिष्टो भवति यथा—प्रभवति तारकोच्छेदनाय सुकुमार रश्मिजालः । तारकारिरपि श्लिष्टः । इति हरप्रक्रमः ।

अथ ब्रह्मा—

हंसगो वेदगर्भश्च रजोगुणसमन्वितः ।
विश्वस्रष्टा सुरज्येष्ठो लोकेशो नाभिपद्मम् ॥४२॥

अथ श्लेषश्लोकः ।

व्याख्यास्य—

हंसासनसमासीनो वेदविद्याविधिनिभः ।
जगन्निर्माणतन्त्रिः सुरज्येष्ठो जयत्यसौ ॥४३॥

परमेष्ठी ध्रुवः भवान्तरात् सुरज्येष्ठः इति नामानि श्लिष्टानि ।

अथ हरि —

राधा-श्यामी-सत्यभामा-रुक्मिणी-गोपिकापतिः ।
दशावतारगुम्फः समुद्रशयनप्रियः ॥४४॥
यदुनाथो गदा-शार्ङ्ग-श्रीवत्स-कौस्तुभध्वजः ।
मधु-धेनुक-चाणूर-पूतना-यमलार्जुनाः ॥४५॥

कालनेमि-हयग्रीव-शकटारिष्ट-कैटभा ।
कंस-केशि-मुरा साल्व-मैन्द-द्विविद-राहव ॥४७॥

हिरण्यकशिपुर्वाण कालियो नरको बलि' ।
शिशुपालश्चास्य वध्या वैनतेयस्तु वाहनम् ॥४८॥

[अभिधानचिन्तामणि, २१९-२२१]

सूत्रम्— राधा-लक्ष्मीपति पायात् सत्याधिष्ठितमानस ।
रुक्मिणी-गोपिका-स्वान्तसरोरुहदिवाकर ॥ ४९ ॥

दशावतारसुभग इत्यादि, यथा —

श्रेयो दशावतारास्ते जीयासुरपरे जिना' ।
चित्रं नमन्नृसिहाय हिरण्यकशिपुच्छिदे ॥५०॥

समुद्रे शयन यस्य यस्य माता च देवकी ।
वसुदेव पिता यस्य स पातु गरुडध्वज ॥५१॥

बाणासुरस्फुरत्कोपमहावह्निघनाघन ।
चाणूरगर्वतटिनीपतिकुम्भोद्भवायित ॥५२॥

इत्यादि स्वयमभ्यूह्यम् ।

अथ **लक्ष्मीः**— चपला कमलोत्पन्ना निधानेषु कृतस्थिति' ।
चतुर्दशमहारत्नप्रथमा कमला सुरी ॥५३॥

**वीतराग** इव **बौ(बु)द्धो** यथा—

भग्नं भवबल येन जितं कन्दर्पशासनम् ।
निर्वाणपदमासीनं तं बुद्ध प्रणिदध्महे ॥५४॥

समन्तभद्रदनुसुतदेवदत्तादयो बु(बौ)द्धा ।

रक्ताम्बरधरा शून्यवादिनस्तस्य भिक्षव' ।
तुम्बपात्रा क्षणिकत्वनिष्ठा मुण्डितमौलय ॥५५॥

सर्वज्ञोपासनाभिज्ञो ज्ञानदर्शनपावन' ।
चारुचारित्रपूताङ्ग समितिगुप्तिसङ्गतः ॥६४॥

उत्तीर्णभवकान्तारः कान्तारागपराङ्मुख' ।
परीषहचमूजेता विनेता मोहमालिनाम् ॥६५॥

जातिवान् रूपसंपन्नो धीमान् तत्त्वार्थपारग' ।
अविकत्थनो नो मायी जितनिद्रो बहुश्रुत' ॥६६॥

मध्यस्थो देशकालज्ञ' सर्वभाषासु कोविद ।
प्रियधर्मा दृढधर्मा संविग्नस्तेजसां निधि' ॥६७ ॥

कंसे संखे जीवे गगणे वाऊय्र सारय(ध्यर)सलिले ।
पुक्खरपत्ते कुमुए विहगे खग्गे य भारंडे ॥६८॥

कुंजरवसहे सीहे नगराया चेव सागरे खोभे ।
चदे सूरे कणगे वसुंधरा चेव अग्गिमि ॥६९॥

**व्याख्या**—कंसपतीव निरवलेवो । सखो इव निम्मलो । जीव इव अप्पडिबद्धो । गयणमिव निरालंबणो । वाउव्व सव्वदेसविहारी । सायरसलिलं व सुद्धहियओ इत्यादि आलापका उत्पद्यन्ते ।

**ब्राह्मणः**— षट्कर्मनिरतो नित्य भिक्षाशूरो बहुश्रुत ।
पुराणवेदतत्त्वज्ञो विशुद्धाक्षरपाठक' ॥७०॥

विशुद्धाक्षराणि उदात्तानुदात्तसमाहारभेदै ।

होमकर्म्मप्रवीणात्मा त्रिसध्य स्नानपावन ।
सन्ध्यावन्दननिष्णात शिखी तिलकमण्डित ॥७१॥

कुशाङ्कितकर स्वाहाप्रियस्याहुतिदायक ।
दधान पाणिराजीवे यष्टिका-करपत्रिके ॥७२॥

दधानो दण्डक स्कन्धे जरद्वस्त्र प्रदीनगी ।
श्वदन्तक्षतिसम्बद्धपङ्को याचने पटु ॥७३॥

क्रमुकस्य त्वचा भिक्षापुटीं बिभ्रत्करान्तरे ।
'दीयता दीयता देहि' वच प्रोच्चै समुच्चरन् ॥७४॥

करे ताम्रमयं भिक्षाकपूर्णं छत्रिकां तथा ।
केदारमार्गगानं च गङ्गासागरवर्णनम् ॥७५॥

योगी— कुम्भोपान्तस्न्यस्तसमस्तोपधिभिक्षुर ।
विभूतिगैरिकाक्लिप्तपाणिविन्यस्तखर्पर ॥७६॥

पारमार्थिकधार्मिका चर्यागानपरायण ।
माहेन्द्रमातङ्गनिष्णात स्वस्वायुप्रधारण ॥७७॥

आधाराख्यं गुदे पृथ्वीचक्रं पीतं चतुर्दलम् ।
स्वाधिष्ठानं लिङ्गमूले वामोध(र्ध)्वं च षड्दलम् ॥७८॥

नाभौ दशदलं श्वेतमाख्यं च मणिपूरकम् ।
हृदयेनाहतं रक्तमाग्नेयं द्वादशच्छदम् ॥७९॥

स्फटिकाभं नभ पठि (कण्ठे) विशुद्धं षोडशच्छदम् ।
लम्बिकायां तु द्वादशपत्रं चैत्यभूतोद्भवम् ॥८०॥

आज्ञाख्यं द्विदलं पद्ममूलवर्णमय भ्रुवो ।
ब्रह्मरन्ध्रे सोमचक्रं षोडशाच्छदमक्षमम् ॥८१॥

सप्तावत्रिकमौर्ध्वास्यं पञ्चाधो वदनान्य(न्द)श्च ।
यदात्मध्यानमेतेषु तन्मुके करणं विदु ॥८२॥

आधाराच्च विनि[ ]शृ(सृ)त्य नाभिपद्मं प्रवेष्टय च ।
ऊर्ध्वं विनिर्गता नाडी सुष्मणा(षुम्णा) ब्रह्ममार्गस्त ॥८३॥

तन्तुमूर्तनिभा शक्तिर्ख्याता सर्पविषापहा ।
संयमो नियमश्चैव कर्णं पुनरासनम् ॥८४॥

प्राणायाम प्राणयाम श्वासप्रश्वा[स]रोधनम् ।
प्रत्याहारस्त्विन्द्रियाणां विषयेभ्य समाहृति ॥८५॥

धारणा [तु] क्वचिद् ध्येये चित्तस्य स्थिरबन्धनम् ।
ध्यानं च विषये तस्मिन्नेकप्रत्ययसंहति ॥८६॥

समाधिस्तु तदेवार्थमात्राभासनरूपकम् ।
एव योगो यमाद्यङ्गैरष्टभि सम्मतोऽष्टधा ॥८७॥

[अभिधानचिन्तामणि ८१–८५]

चण्डी — त्रिशूलभिन्नमहिषासुरासृक्कृतकर्दमा ।
सहस्रोदारदोर्दण्डा चण्डी मुण्डविडम्बिता ॥८८॥

जिनयक्षाः— प्रसन्नपावनाकारा जिनपादकृतालया ।
चतुर्भुजा महाकाया सङ्घसान्निध्यकारिण. ॥८९॥

ते च गोमुखाद्याः ।

अथ **आश्रमबीजानि**—

अथ तत्रानवरताध्ययनध्वनिमुखराणि, भस्मपुण्ड्रकपाण्डुरललाटै कपिशशिखानालजटिलै कृशानुभिरिव क्रतुलोभागतैर्वटुभिरध्यास्यमानानि, सेकसुकुमारसोमकेदारिकाहरितायमानप्रघणानि, कृष्णाजिनविकीर्यमाणशुष्यत्पुरोडाशीयश्यामाकतण्डुलानि, बालिकाविकीर्यमाणनीवारबलीनि, शुचिशिष्यगणानीयमानहरितकुशपूलीपलाशसमिन्धि, इन्धनगोमयपिण्डकूटसंकटानि, आमिक्षीयेक्षीरक्षारिणीनामग्निहोत्रधेनूनां खुरवलयैर्विलिखिताजिरवितर्दिकानि, क(का)मण्डलव्यमृत्पिण्डमर्दनव्यग्रयतिजनानि, वैतानवेदीशङ्कव्यानामौदुम्बरीणा शाखानां राशिभि पवित्रितपर्यन्तानि, वैश्वदेवपिण्डपङ्क्तिपाण्डुरितप्रदेशानि, हविर्धूमधूसरिताङ्गनविटपिकिसलयानि, वत्सीयवत्सपालकलालितलत्तरतर्णकानि, क्रीडत्कृष्णसारछागशावप्रकटितपशुबन्धप्रबन्धानि, शुकशारिकाग्रन्थाध्ययनदीयमानोपाध्यायविश्रान्तिसुखानि, साक्षात्त्रयीतपोवनानीव चिरदृष्टाना बान्धवाना प्रीयमाणो भ्रमन् भवनानि, आश्रमाणा सुखमतिष्ठत् ।

[ **हर्षचरिते** द्वितीयोच्छ्वासे । ]

मित्रोपकरणमात्मा, भृत्योपकरण प्रभुत्वम्, पण्डितोपकरण वैदग्ध्यम्, बान्धवोपकरणं लक्ष्मी कृपणोपकरणमैश्वर्यम्, द्विजोपकरण सर्वस्वम्, सुकृतसंस्मरणोपकरण हृदयम्, धर्मोपकरणमायु, साहसोपकरण शरीरम्, असिलतोपकरणं पृथ्वी, विनोदोपकरण राजकम्, प्रतापोपकरण प्रतिपक्ष, नास्यात्पपुण्यैरवाप्यते ।

अथ **कुलवधूः**—नीरङ्गी पतिभक्ता गुरुजनशुश्रूषणासु निष्णाता ।
लज्जावती गुणवती प्रेमवती स्वल्पवचना च ॥९०॥

---

१ दना सह पय स(शृ)तम । **आमिक्षा** सा शृतोष्णे या क्षीरे स्याद्दधियोगत’ । [**अमरकोश**, १३९८]—स०

प्राप्तायां यमभूपतेरिव निशाधाट्यां जरायामिय
दृष्टा केवलमेककैव सुभटी हृत्पत्तने वल्गति ॥१०१॥

गतोदन्ता दन्ता पलितकलित' कुन्तलभर'
तम क्षेत्रे नेत्रे विषयपुटिनीनश्रुतिपुटी ।
अभूदङ्गं रङ्गद्वलिवलयवीथीविलुलितं
तथाप्येतच्चेतस्तरुणमिव धावत्यनुदिनम् ॥१०२॥

**वालक्रीडनकानि**—अरीरमद् देवकुमारमण्डली तं पौरनेत्राम्बुजराजिभास्करम् ।
सुवर्णपूर्णै. करकन्दुकादिभिर्विनोदनैर्दृष्टिहरैर्हरे[र]पि ॥१०३॥

यत्कुट्टिमे गंवगपाणिगोचर[1]श्चरन्महीन्यस्तपदद्वयप्रभु ।
सरोवरे वालमरालवैभव कुर्वन्निव प्रीतिकरो न किन्तु तत् ॥१०४॥

वभौ विष्णुपाणितलास्तृणा(?) व्रजन्
प्रेम्णा भृगं पाणितल दिने दिने ।
अवुद्धमूल्य किल वारिधेर्मणि—
र्देदीप्यमानो वणिजा प्रयात्यलम् ॥१०५॥

गजतुरगरोहणाढ्य सुकुमार विभुमकारयद् वज्री ।
पुरतो जयजयशब्दं वन्दीव चकार हर्षेण ॥१०६॥

**पुस्तकम्**— सद्वर्णं पा(॰प)त्रसकीर्णं पुस्तक गुणभासुरम् ।
स्वर्गवद् वहुलेखं च पृथुश्लोकं नरेन्द्रवत् ॥१०७॥

**जिनचैत्यम्**—मण्डपश्रेणिसंकीर्णं चारुपञ्चालिकावृतम् ।
तुङ्गतोरणराजिष्णु साक्षात् सिद्धालयोपमम् ॥१०८॥

**शिवचैत्यम्**—नन्द्यादिमूर्तिरुचिर द्वारस्थवृषभासुरम् ।
पञ्चवर्णपताकाढ्यं वहि कुण्डेन मण्डितम् ॥१०९॥

**विष्णोः**— दशावतारमूर्तीना रूपकै परिपूरितम् ।
कलशाग्रपतत्रीशमूर्तिव्यक्तं प्रकीर्तितम् ॥११०॥

**कामदेवस्य**—चतुर्द्वार चतुर्मूर्ति कामदेवोपशोभितम् ।
आरक्तध्वजराजिष्णु रतिप्रीतिमनोरमम् ॥१११॥

१ प्रतौ तु ॰चरो चर॰' इति पाठ ।

पार्श्वप्रोन्नतवृक्षालीपद्मिनीसंक्रमावृतम् ।
सौरस्यक्रौञ्चहंसादिस्वरपूरितदिङ्मुखम् ॥११२॥

प्राकारः— भैरवादिमहायन्त्रस्फुरद्विषमशीर्षतम् ।
नानामारयुतं वप्रं कपिशीर्षामदारुणम् ॥११३॥

प्रतोली — वज्रद्वारकपाटाढ्या नाराचशरसंकुला ।
चण्डिकाक्षेत्रपालादिमूर्त्तिमुद्गरपालस्म् ॥११४॥

ग्राम — नृत्यादिमण्डित स्फूर्जद्गोपन पामरावृत ।
निविडफलगर्भो(द्रो) लोकन्यस्तसौकापण स्वस्थ ॥११५॥

वृक्षः— पत्रपुष्पफलाकीर्ण आवापपरिमण्डित ।
दोहदेन कृतोल्लासो निवास सर्वपक्षिणाम् ॥११६॥

गौ — कुण्डोध्नी सुव्रता कण्ठपीठीबद्धसुघण्टिका ।
रसानुगा शुभाकारा साक्षात् कामगवीसमा ॥११७॥

वृषभ — शृङ्गाङ्कित स्वैरचारी पीवर स्कन्धबन्धुर ।
पादनूपुरझङ्कारी भाङ्कारै पूरिताम्बर ॥११८॥

मत्तवारणम्— प्रतिग्रानमनोहारि जलद्रोणीविभूषितम् ।
कृत्स्नस्तम्भविनोदभ्रं स्फुरच्चञ्चपटाकुलम् ॥११९॥

सुवर्णदण्डिकाचिरमरित्रै परिपूरितम् ।
पटसैर्मघवमाणाम्बु व्यजच्छत्रसमाकुलम् ॥१२०॥

शुक्रवार सदापूर्वं निवासक्रिययान्वितम् ।
उपहारमनोहारि वार्देवभूमयाश्रितम् ॥१२१॥

धीवराः— स्वनामवत् ये आनन्ति गिरीन् दर्शाब्ध दुर्गमान् ।
मज्जनान् वेत्रवल्मयानाबलौध अपारितका ॥१२२॥

मत्स्यमञ्जः—स्मरन्ति देवगा कुल्या गहमाणं विरामत ।
सुखान्तं पार्यत स्वाम्ना कूपरस्तम्भस्तु पात्यते ॥१२३॥

---

१ अत्र तु 'द्रुक्कमं' इति पाठः । 'मुक्सन' इति भरवीभाषायाम् ।—सं०

जलधौ क्षिप्यते वस्तृड्डपानां च स(ʻनिम)ज्जनम् ।
हाहेति निनदोच्चार सर्वत' स्फुरति स्फुटम् ॥१२४॥

**देशोत्पातः**—अट्टहास विकुर्वन्ति देवता अश्मनिर्मिता ।
कम्पन्ते च रुदन्त्युच्चै प्रस्वेदं दधति स्फुटम् ॥१२५॥

तोरणानि पतन्त्याशु विशन्ति श्वापदा पुरे ।
जलस्थानेपु नीरणां विकारो दृश्यते वहु ॥१२६॥

नारीणां विकृतिर्गर्भे कौशिका पुरमध्यमा (गा) ।
आकर्षन्ते मुहु काका सुरधामध्वजाञ्चलान् ॥१२७॥

भूमिकम्पोऽथ निर्घातो भूतव्यन्तरदर्शनम् ।
ग्रहा धूम विमुञ्चन्ति सच्छिद्र रविमण्डलम् ॥१२८॥

शीतपादे गतरुचौ सूर्ये मन्दत्वमीयुपि ।
दिवा ददृशिरे तारा जनस्येवाश्रुबिन्दव' ॥१२९॥

अपर्वण्यपि सूर्येन्द्वोर्ग्रहणं दृश्यतेतराम् ।
वेतालभूतनगरदर्शनं चर्मचक्षुपाम् ॥१३०॥

**कटकोत्पाताः**—हारस्त्रुटति कण्ठाग्रात् मौलि स्खलति शीर्षत' ।
भनक्ति पवनश्छत्र खड्ग पतति कोशत ॥१३१॥

सेनाधिपा निरुत्साहा गुडां गृह्णन्ति न द्विपा ।
रजस्वला दिश सर्वा रथक्षो(रथाक्षा)भङ्गमिथ्रति ॥१३२॥

**धाटी**— इतो गृह्णीत गृह्णीत हत हतेतिभाषिण ।
लुण्टाका पदवीवन्ध कुर्वते क्रूरनिस्वना' ॥१३३॥

ध्रियन्ते वणिजो हस्ते ज्वाल्यन्ते वृतयस्तथा ।
उद्दाल्यन्ते बलाद् बाला स्फोट्यन्ते हट्टराशय ॥१३४॥

लोहकुन्तान् भुवि क्षिप्त्वा ज्ञायन्ते निधयोऽखिला ।
भूमिगृहाणि शोध्यन्ते तथान्तरगृहाणि च ॥१३५॥

असार त्यज्यते वस्तु सारं चैव निरीक्ष्यते ।
बन्दिभि. प्रोह्यते भाण्डं गवां हरणपूर्वकम् ॥१३६॥

युद्धभङ्ग — मृगुपातं पतन्त्येके तृणान् गृह्णन्ति च र्जिं ।
मूषा इव पतन्त्येके भासोच्छ्वासनिरुम्भत ॥१३७॥

त्वदीया पिप्पला नाथ त्वदीया यामिनायका ।
त्वदीया अङ्गनास्थेति मापन्त कातरा रणे ॥१३८॥

शून्यासना भ्रमन्त्यथा विमुच्य वारणान् नृपा ।
कृत्वा वेषपरावर्तं प्रणश्यन्ति यथा तथा ॥१३९॥

नगरभङ्ग — प्राकार पात्यते वेगाद् च्यात्यन्ते सौधराशय ।
छिद्यन्ते रमणो वृक्षा भिद्यन्ते च जलाशया ॥१४०॥

शृङ्गारहाररुचिरा परभृङ्गणमीरन ।
झम्पां ददति कूपेषु भीरवो धृतबालका ॥१४१॥

अथ वणिजः—गणितज्ञो महालोभी सुन्दिको मृदुवाक्यपृव् ।
गूढदत्तापहारी च स्पष्टदत्तस्वकम्बक ॥१४२॥

तथा— अपहरति गूढदत्तं प्रकटितदत्तेऽपि वदति सन्देहम् ।
क्रयविक्रयेऽपि लुम्पति तथापि लोके वणिक् साधु ॥१४३॥

अथ कायस्थः—सदाक्षरोपजीवी स्यान्महाबुद्धिर्विचक्षण ।
वास्तव्य-गौडमैत्रेय बहुधा परिकीर्तित ॥१४४॥

अथ क्षत्रिय —शस्त्रदक्षकृताभ्यासो रणविद् गुरुमत्सर ।
स्वामिकार्यकृते दक्षो दानी मानी मिताहव ॥१४५॥

शूर संग्रामरसिको नानाविरुदभासुर ।
प्रहारभगराजिष्णू रणे पतितपञ्जर (पञ्जर) ॥१४६॥

अथ क्षपणकः—मायूरपिच्छी निर्ग्रन्थो नित्यं केशविलुम्प(ञ्च)क ।
अन्तरायविधिप्राज्ञो मलपूरितविग्रह ॥१४७॥

अथ तपस्वी —शिवपूजारतो नित्य भस्मभासितविग्रह ।
जटाजूटरतो योगमन्त्रोच्चारमनोहर ॥१४८॥

१ प्रायोऽत्र 'वास्तव्य-गौडमैत्रेय' इति पठितव्यम्। वास्तव्यकायस्थ गौडकायस्थ इति स्वभेदात्। [—सं ]
२ प्रभौ तु तपस्विनः इति पाठः ।

शिवागमविचारज्ञ षट्पदार्थोपवर्णक ।
एकवासाः करकोडकमण्डलुविराजित ॥१४९॥

अथ सांख्यः—पञ्चविंशतितत्त्वज्ञस्त्रिदण्डी रक्तकर्पट ।
स्नानभोजी कराम्भोजस्वर्णमुद्रापवित्रित. ॥१५०॥

कपिलाख्यातसिद्धान्तपारगो ब्रह्मचर्यभृत् ।
श्रीखण्डतिलकी तीर्थवासी नाशितकिल्बिष ॥१५१॥

अथ चार्वाकः—पञ्चभूतार्थवेदी च तत्त्वोपप्लवकारक ।
अध्यक्ष (’क्ष)प्रमितेर्वक्ता पुरुषार्थविदूषक ॥१५२॥

अथ कविः—शब्दार्थवादी तत्त्वज्ञो माधुर्योज प्रसाधक ।
दक्षो वाग्मी नवार्थानामुत्पत्तिप्रियकारक ॥१५३॥

शब्दार्थवाक्यदोषज्ञश्चित्रकृत् कविमार्गवित् ।
ज्ञातालङ्कारसर्वस्वो रसविद् बन्धसौष्ठवी ॥१५४॥

षड्भाषाविधिनिष्णात षड्दर्शनविचारवित् ।
नित्याभ्यासी च लोकज्ञश्छन्द'शास्त्रपटिष्ठधी' ॥१५५॥

सज्जनः— स्वगुणाच्छादक कृत्यवेदी परगुणप्रिय ।
पीयूषकल्पवचन परसूक्तियशस्कर' ॥१५६॥

दुर्जनः— परापवादनिष्णात परकाव्यविदूषक ।
सदाभिमानी दुर्ध्यानी नीचसेवापरायण ॥१५७॥

चौरः— उदयद्भपिण्डिका(’को) लोललोचन[ ] क्षत्रपापकृत् ।
असत्यवादी मायावी सवैर्यो बहुवेषभृत् ॥१५८॥

वालुकाक्षेपको रात्रौ शकुनज्ञो दयोज्झित' ।
तालोद्घाटनविद्याज्ञश्चुम्बकभ्रामकाश्मभृत् ॥१५९॥

अथ अर्थोत्पत्तिबीजानि—

पद्म सर पयोराशी रोहणाद्रिर्दिनेश्वर ।
चन्द्रो नभस्तल गङ्गा पृथ्वी भण्टारमन्दिरम् ॥१६०॥

निधि स्तुरिका मूलधन कुण्डं हिमाचल ।
समस्या जलदारामौ कार्मण कुलमन्दिरम् ॥१६१॥

मानसं नगर कम्प प्रतिष्ठानं सरोरुहम् ।
मधुर्ग्रीष्मश्च वर्षाश्च शरद्धेमन्तशीतक ॥१६२॥

परशुर्दववह्निश्च भारतीहस्तपुस्तक ।
पद्मिनी चन्द्रिका चूतो नभाङ्गनं सुभाजनम् ॥१६३॥

आदर्श कङ्कणं प्राची विन्ध्यशैल प्रमोदय ।
क्षेत्रं कन्द खनिर्मूलमटवी शत्रमालम् ॥१६४॥

दीपो जलनिधौ द्वीपो मरौ शाम्बी हिमे शिखी ।
वृषभ स्यन्दन पुष्प चार्गला द्वारकुञ्चिका ॥१६५॥

हस्तावलम्बनं मार्गो दिवामुखं प्रमोदयं ।
क्रीडाम् क्रीडोपवनं रयो नवास्तमरिक्नी ॥१६६॥

व्याख्या— एभि पदैरर्थमीप्सुत्पद्यते, तद्यथा–

पद्मम्—सरसाभ्युन्दिलपत्रलं नम्रमणिकरकेसरं नरसुरालिम् ।
त्रिभुवनकमलानिलयं जिनपतिपदपङ्कजं नमत ॥१६७॥

अथवा —गुणमुक्तावलीपद्मम् ।

सरा यथा—अनिशामकमलममनोज्ञं कीर्तिजलं सकललोकमहनीयम् ।
भव्यजनकुमुदनिकर नमामि नाभेयचरणसर ॥१६८॥

पयोधि गाम्भीर्यरत्नपाथोधि । अथवा मर्यादातटिनीश्वर ।
रोहणाद्रि —गुणमाणिक्यरोहण ।
सूर्यः—तमस्तोमदिवानाथ ।
चन्द्रः—नम्रकैरविणीचन्द्र ।
नभस्तलम्—यशस्तारामतलपथ ।
गङ्गा—पापपङ्कापनोदाय साक्षाद् गङ्गेव वीक्ष्यते ।
पृथ्वी—अनिन्द्यगिरिपृथ्वी गमते मारुतीमम् ।
भण्डारमन्दिरम्—मौक्तिकरत्नभण्डार ।

१ पुनर्मिलितं प्रयुक्तत्वात् । भ्रान्तापापमत्र प्रभोक्तत्वम इति व्याख्यातं । [–सं ]

**निधिः**—कीर्तिविस्फूर्तिसेवधि' । कीर्तिसद्रत्नसेवधि' ।

**खलूरी**—इयं विराजते रामा काममल्लखल्लरिका ।

**मूलधनम्**—वाल्मीकिशास्त्रं सकलकविजनानां मूलधनम् ।

**कुण्डम्**—विशदयश पयसां कुण्डम् ।

**हिमाचलः**—कीर्तिगङ्गाहिमाचलः ।

**समस्या**—पुण्याना समस्या, ऋचां वा । आशीर्वचसां वा ।

**जलदः**—भवसतापतप्ताना चन्द्रमौलिर्धनाघन' ।

**आरामः**—आराम कीर्त्तिवल्लीनाम् ।

**कार्मणम्**—अमूलमन्त्रतन्त्र च कार्मण निर्वृतिश्रिय' ।

**कुलमन्दिरम्**—सत्कीर्त्ते कुलमन्दिरम् ।

**मानसम्**—मानस गुणहंसानाम् ।

**नगरम्**—नगर गुणपौराणाम् ।

**कल्पः**—परलोकगतौ कल्प ।

**प्रतिष्ठानम्**—धर्मपोतप्रतिष्ठानम् ।

**सरोरुहम्**—पुण्यभृङ्गसरोरुहम् ।

**मधुः**—पुण्यभूतोदये मधु ।

**ग्रीष्मः**—पापपङ्कहतौ ग्रीष्म' । कल्याणवल्लरीकन्दसमुद्भेदतपात्यय' ।

**वर्षाः**—भक्तिकन्दलिनीमेघ ।[1]

**शरत्**—पापपङ्कं तनूकुर्वन् जिनेश शरदायते ।

**हेमन्तः**—मोहपङ्कजिनीहिमम ।

**शिशिरः**—कर्मभदन्तनिर्भेदी ।

**परशुः**—योग सर्वविपद्वल्लीविताने परशु शित ।

**वनवह्निः**—ससारद्रुदवानल ।

**भारतीहस्तपुस्तकः**—गुरुर्विजयतां वन्द्यो भारतीहस्तपुस्तक ।

**पद्मिनी**—भक्तिश्रीपद्मिनीसूर ।

**चन्द्रिका**—भवता (' भविना) भवतापौघहरी यस्यास्ति देशना ।

**चूतः**—सुकृतारामचूतस्त्वम् ।

**अञ्जनम्**—सुदृशाममृताञ्जनम् ।

**[सु]भाजनम्**—पुण्यमुक्तासुभाजनम् ।

---

१ प्रतौ त्वियं व्याख्या हेमन्तव्याख्यानन्तर लिखिता ।

आदर्श —नमेन्दुवदनादर्श पदपद्मदर्पणम् ।
कङ्कणम्—विज्ञानप चिरं जीयात् भारतीकरकङ्कणम् ।
प्राची—पुण्यसूर्योदयप्राची ।
विन्ध्यशैल —वार्णानर्मदाविन्ध्यशैल ।
सुगुणकरटिसूतो विन्ध्यशैलो नरेन्द्र ।
प्रमोदय —पापध्वान्तप्रमोदय ।
क्षेत्रम्—क्षेत्रं सत्कीर्तिबीजानाम् ।
कन्द कन्द कल्याणशाखिन ।
खनि —गुणरत्नमहाखनि ।
मूलम्—मूलं कल्याणवल्लर्याः ।
अटवी—भयानकमहाटवी ।
आश्रमम्—श्रोत्रियमहाश्रमम् ।
आलय —कलापौरीमहालय ।
दीप —तमस्तोमभिदा दीप ।
द्वीपः—भवाम्भोधौ जिनो द्वीप । मरौ शाखी हिमे शिखी ।
कूपः —कूप कुम्भपुरोग्राहे ।
स्यन्दनः मोक्षपुरस्यन्दनोपम ।
पुष्पम्—पुष्पं पुण्यमहीरुह ।
अर्गला—अर्गला कुगतिद्वारि ।
द्वारकुञ्चिका—महानन्दपुरोदारद्वारोद्घाटनकुञ्चिका ।
हस्तावलम्बनम्—भवकूपे निपततां देवो हस्तावलम्बनम् ।
मार्ग —महानन्दपुरीमार्ग ।
दिवामुखम्—मोहध्वान्तदिवामुखम् ।
प्रमोल्लास —शुभपद्मप्रमोल्लास ।
क्रीडाभू —कलाकलापकमलाक्रीडाभूम् ।
क्रीडोपवनम्—अतिशयलक्ष्मीक्रीडोपवनम् ।
तमस्विनी—पापध्वान्ततमस्विनी ।
नदीरयः—मोहद्रुमनदीरये ।

१ कोशपुस्तकेषु पूर्वं 'नदीरय' पश्चात् तमस्विनी इति क्रम ।

इत्यादिभि' पदै' विशेषणानि कोटिश उत्पद्यन्ते । पद्म पद्मिनी पद्मोदय इत्यादिपदानां न पौनरुक्त्यं भङ्गान्तरेण भणितत्वात् । तथा श्वेतादिभि पञ्चभिर्वर्णैरिवादियुक्तै श्लोका भवन्ति । तद्यथा–

श्रीखण्डद्रवचर्चिता इव डिण्डीरपिण्डमण्डिता इव यस्य यशोभिर्दिशो बभु', इत्यादि ।

इदानीं **दोषवीजमाह**–

चन्द्रे लक्ष्माम्बुधौ जाड्यं खरत्वं दिवसेश्वरे ।
कण्टकत्व च पद्मिन्यां कूटत्व कनकाचले ॥१६९॥

नग्नत्वं चन्द्रमौलौ च शून्यत्वं व्योममण्डले ।
खड्गे कुशीलता श्लेपे गुणघातश्च कार्मुके ॥१७०॥

स्वपुत्र्यामनुरागश्च प्रोक्तश्च परमेष्ठिनि ।
रुक्मिणीहरणं विष्णौ भरते भ्रातृविग्रह' ॥१७१॥

गजेन्द्रे दानविच्छेदो लक्ष्मणे सर्वलोपता ।
कङ्कणे मध्यशून्य च (? न्यत्वं) रामे क्रौञ्चविदारणम् ॥१७२॥

परदाराभिगमत्व वज्रपाणौ प्रकीर्तितम् ।
अचेतनत्व कल्पद्रौ मात्स्यो न्यायस्तिमौ तथा ॥१७३॥

शून्यवृद्धिर्भवेदङ्के लोलत्व मृगचक्षुषि ।
स्वर्गे विमानससर्ग शून्यताधारणं श्रिय ॥१७४॥

वक्रत्वं छन्दसि गुरौ तुलारोहश्च भास्करे ।
हतोऽश्वत्थामेति गिरोऽसत्यवाचो युधिष्ठिरे ।
वृषव्यापादन विष्णौ इति दोषा प्रकीर्तिता ॥१७५॥

सर्वेऽपि सदोषा प्राय पदार्थास्तत केन सम भवानुपमीयते ? ।
स्पष्टम् ।

असत्संभावनगिरा भवेदर्थो मनीषिणाम् ।

**व्याख्या**—यद्याकाशमङ्गुल्यामनुमीयते, यदि पाथोनाथ प्रस्थद्रोणादिभिश्च, यदि शेषस्येव मम सहस्रवक्त्रत्वम्, यदि इन्द्रस्येव नयनसहस्र[त्व]म्, यदि ब्रह्मण इव मम चतुर्वक्त्रत्व भवेत्, तदा तव गुणा वर्णयितु मया शक्या ।

विरुद्धार्थप्रकाशत्वे कोटिशोऽर्थं प्रमायत ॥१७६॥

व्याख्या —यद्येवमविनयवती प्रवृत्तिर्भवताऽपि स्यात्, तदा मुधाऽऽचर्यमित्यादि कृशानुकृणवपनम्, मराश्चक्रमम्, पवनस्य प्रन्थी बन्ध, जिह्वायां कमलिनीवपनम्, मृतस्य चर्चा (?) बधिरे गीतम्, अन्धस्य दीपदर्शनम्, पङ्गुपुरुष पवनगति, मूके वावदूकत्वम् वह्नौ शीतत्वम्, ऊषर धान्योत्पत्ति, सुधायां विषोद्गम इत्यादि।

सर्वोपमार्थबीजमारभ्यते, तद्यथा—

क्षमायां तीर्थनाथोऽस्तु दयादाने च बोधिद ।
गुरुत्वे गगनं स्थैर्ये मेरू रूपे च मन्मथ ॥१७७॥

दाने च बलि-कल्पद्रु-कर्णाद्या परिकीर्तिता ।
परप्राणस्य रक्षायै चक्री चक्रायुध सुधी ॥१७८॥

जीमूतवाहनस्तद्वत् सत्ये राजा युधिष्ठिर ।
हरिश्चन्द्रनृप सत्त्वे सुस्वरत्वे च कोकिल ॥१७९॥

शुद्धद्वितयपक्षत्वे मराल कीर्तितो बुधै ।
प्रतापे सविता सौम्ये चन्द्रो मतौ बृहस्पति ॥१८०॥

त्रिमार्गी स्वर्ग प्रासादे कुसुमे मालती तथा ।
तीर्थे शत्रुञ्जयगिरि पूतत्वे स्वर्धुनीजलम् ॥१८१॥

दुर्वासा महर्षि कोपे द्यूते नैषधभूपति ।
रौहिणेयस्तथा चौर्ये गाम्भीर्ये च महोदधि ॥१८२॥

पराक्रमे च पार्थेन्द्रो धैर्ये च नलो नृप ।
कार्पण्ये मुर्म(म्मण)ण श्रेष्ठी लोभे नन्दो महीपति ॥१८३॥

कालशौकरिक प्राणिविघाते कीर्तितो बुधै ।
पुर्यामयोध्या नारी मानसं च सरोवरे ॥१८४॥

रामा रूपे रतिर्गौरी शस्त्रे श्रेष्ठा धनुर्लता ।
इन्द्रिये लोचनं प्राहु सर्वधर्मे तथा दया ॥१८५॥

वन्दनायां किराटश्च वाद्ये वीणा गुणे क्षमा ।
काञ्चनं धातुषु प्रोक्तं नेपथ्ये मुकुट स्फुटम् ॥१८६॥

मन्त्रे सारस्वतं सारमुपमा स्यादलंकृतौ ।
भोज्ये दध्योदन सारं सर्वर्तुषु च माधवः ॥१८७॥

सद्ग्रन्थनिर्मितौ व्यास-वाल्मीकि-श्रीत्रिविक्रमा ।
धनञ्जय कालिदासो माघो भारविरित्यपि ॥१८८॥

बाणो गुणाढ्योऽभिनन्दि श्रीहर्षो भोजभूपतिः ।
सुबन्धुर्धनपालश्च बी(वि)ल्हणो राजशेखर ॥१८९॥

अथ **जैनाः**—

भगवान् गौतमस्वामी श्रीशय्यम्भवसूरिराट् ।
भद्रबाहुर्हरिभद्र शीलाङ्क शाकटायन॰ ॥१९०॥

उमास्वातिप्र

[अत॰ परं पुस्तकस्य पत्र नष्टम् ।]

* *

[कैलास॰] किल रावणेन तु जितो बाहुद्वयेनाचल॰
श्रीगोवर्द्धनभूधरो मरुजिता तूर्णं च तीर्णोऽर्णव॰ ।
चक्री बाहुबलेन बाहुबलिना भग्नो रणे भूरिश॰
तत् सर्वं सुरधामजं विजयते धामोच्चकैर्भूतले ॥१९१॥

तज्जेतुं स्पर्द्धया हस्ते धर्तुं तस्य जिगीषया ।
जात तस्य स्वरूपं च ग्रहीतु तस्य च श्रियम् ॥१९२॥

**व्याख्या—** प्रासादो विमानानि जेतुमभ्रलिहग्गिरा बभूव । अन्येऽपि पदार्था ये तुङ्गत्वे दृश्यन्ते तेषामित्थमर्थोत्पत्ति॰ । अथवा स्पर्द्धया ममापि किमयमुच्चैस्तर २/, इति तुङ्गत्वे स्पर्द्धया । हस्ते धर्तुमिव(ति) सुगमम् । तस्य जिगीषया इति सुगमम् ।

तस्य स्वरूपस्वम् आम्नायस्य कौलीन्यं वा व्ययधर्मा वा न्यासरक्षिति आतुमुभव इव । शेषं सुगमम् ।

स्वर्गप्राप्त्यै रिपुच्छित्त्यै कौतुकात् पूर्वजक्रमात् ।
दम्भकैतवशब्देन भवेदर्थस्य संगति ॥१९३॥

व्याख्या– ये केचन महीतले पदार्थास्ते स्वर्गेऽपि इमा । तद्यथा—प्रासादानामिह विमानं तत्किङ्किणीक्वाणन आकारयतीव आवर्जयतीव । तथा तुरगा अश्विनि व्योममण्डलं गच्छन्तो दिनकररथतुरगमिलनायेव धावन्ति । गजा उच्चैस्तरा ऐरावणेन सह सङ्गतिकरणायेव करान् व्योमगान् कुर्वन्ति । उत्प्लुत्य हरिणा हरिणाङ्क हरिणमिलनायेव व्योममण्डलमुत्पतन्ति । य एव दृष्टास्त एव रिपव कल्पनावशात् । वेतुमित्यादिभि क्रियाभि पूर्वे पदार्था योज्यन्ते । कौतुकात् प्रासादा उच्चा कौतुकादिव स्वर्गमनुवर्तन्ते । दम्भकैतवशब्देन तद्यथा—

सिंहध्वजिच्छिसामन्तमूर्तामिव बिभर्ति य ।
सिंहलक्ष्मच्छलात्स्ये सोऽस्तु वीरजिनेश्वर ॥१९४॥

यथा वा—

मुग्धप्रमादण्ड इवोर्ध्वगामी स पातु व कंसरिपो कृपाण ।
य पाञ्चजन्यप्रतिबिम्बमङ्गया धाराम्भस फेनमिव व्यनक्ति ॥१९५॥

नेमिं नमामि य नीत्य चिन्ताधिकफलप्रदम् ।
अपि धर्मनिधि शङ्खलक्ष्मव्याजेन सेवते ॥१९६॥

दम्भकैतवशब्दा पर्यायेण प्रयोज्या । एवं स्वार्थसङ्गति । पूर्वजक्रमादि— अस्माकं कुले कल्पद्रुमाश्चिन्तितार्थसार्थप्रदायिका भवन्तीति हेतो सहकारकारस्करा पथिकेभ्य फलानि प्रयच्छन्ति । जीमूतवाहनकुलोत्पन्ना भवो हेतो परत्राणपरित्राणे क्षत्रिया वैपरीत्येन । एवं व्याख्यातम् ।

चरमानुपूर्वीन्यायप्रज्ञापनार्थम् ।

तन्त्रजाले विशाले हि शिशूनां विशता मताम् ।
क्षोभमभ्येति धीर्मध्येपयोधि पततामिव ॥१८७॥

पद्मोपमप्रभं वक्त्र रामाया शोभतेतराम् ।
प्रहृष्यन् सर्वदा यस्मिन् रते भर्ता स्थितिं सृत ॥१८८॥

द्वितीय यथा—

भङ्गीमङ्गीकरोत्यस्या पङ्कजश्रीसखं मुखम् ।
कदाचिदत्र निद्राति नोद्रेक सवरद्रुह ॥१८९॥

पदस्य सञ्चारिणी[1]—

राकाकैरविणीकान्तकान्तकान्तिमलिम्लुचा ।
उदित काममित्रेण देवेन मृगलक्ष्मणा ॥१९०॥

सब्रह्मचारि चारित्र शरत्कैरविणीपते ।
सगोत्र रात्रिराजस्य सनाभि तुहिनद्युते ॥१९१॥

साधर्म्यपदयोजना—

वन्धूकवन्धुता धत्ते मुग्धे ते मधुरोऽधर ।
रोमराजेश्च सेवालवल्लीभृङ्गच्छदादिकम् ॥१९२॥

नाभेरावर्त्तचक्रादि तरङ्गादि वलिस्रज ।
नितम्वस्य तथा चक्रकलधौतशिलादिकम् ॥१९३॥

। ...

करसेभकरौ(?)रम्भाकाण्डमूर(रु)युगस्य च ॥१९४॥

कृष्णाहि-बर्हिबर्हाभ्यां परै(? दै)रौचित्यशालिभि ।
कृष्णैस्तु वस्तुभि साम्यं केशपाशस्य योजयेत् ॥१९५॥

बालपल्लवपद्माद्यैर्ज्ञेय तत्पादयोस्तथा ।
मत्तेभकलहंसाभ्या गतौ साधर्म्यमिष्यते ॥१९६॥

पद्मोत्पलानि न पर समानि प्रमदादृश ।
यावच्चकोरसारङ्गप्रभृतेरपि दृष्टय ॥१९७॥

---

१ प्रतौ अयं श्लोको पूर्वं लिखित पश्चात् लोपित —

इन्दुसौन्दर्यलुण्टाक शशिकोमलतस्कर ।
चन्द्रबिम्बद्युतिद्रोहि रोहिणीशाभिमानहृत् ॥

दृश्येमानुसारेण मदिरादृष्टिरित्यपि ।
उच्यमाना कवीन्द्राणां समये दृश्यतेऽङ्गना ॥१९८॥

दन्ताना मौक्तिके क्वापि पद्मरत्नाङ्कुरे क्वचित् ।
अन्यैरन्यैश्च साधर्म्यं ज्ञेयं प्रकरणे क्रमात् ॥१९९॥

कुररीकोकिलादीनां गिरा स्त्रीणां समा गिर ।
पुंसां च सिंहजीमूतमुरजध्वनिमा(?ता)दिभिः ॥२००॥

कुन्दशेफालिकाजातिवासन्तीनवमालिका ।
तगरं मुचुकुन्दं च कुटजं करवं तथा ॥२०१॥

सतच्छदं कासरोधमधूकं च विपाकवत् ।
सिन्दुवारं विचकिलं पिण्डीतगरमित्यपि ॥२०२॥

कीर्त्यादिषु यशादीनां वर्ण्यमानेषु योजयेत् ।
पुष्पमात्रैरेवमादि साधर्म्यं विनियोजयेत् ॥२०३॥

साक्षात्क्षीरोद-जाह्नव्यौ सुधाक्षीरादिकं तथा ।
पुण्डरीकं कैरवं च सद्वर्णं कुसुमं तथा ॥२०४॥

मृणालकम्बुचन्द्रादि तथा ब्रह्मं तदुद्भवम् ।
बलाका गजहंसश्च तथा शङ्खरकर्करा ॥२०५॥

एवावर्तं च नानीया प्राणिभ्यो मकरध्वजा ।
कैलासं हिमवन्तं च गिरिभ्यो कल-शाङ्करौ ॥२०६॥

देवेभ्यस्तद्गिरिभर्त स्फटिकं तुहिनं तथा ।
शेषं फणि(?)निर्मोकं सर्वेषामपि भोगिनाम् ॥२०७॥

सवतीव सुगन्धिभ्य कर्पूरं चन्दनं तथा ।
एवमादिषु शुभार्थवाग्भिश्यदेषु दीर्घता ॥२०८॥

समासेन—क्षीरोदलहरीपुरम् । अथवा—

उत्फुल्लमल्लीकुसुमावदातो विभोवतेऽयं रजनीभुजङ्ग ।
सेफालिकागुच्छसनाभिरिन्दु ॥२०९॥

-- ।

-- मल्लीपरिचित शशी ॥२१०॥

प्रतापादि नरेन्द्रादे· शोणं यदि च वर्ण्यते ।
अयमेव क्रम· शोण· द्रव्ये साम्ये तदिष्यते ॥२११॥

रक्ता . . . ...
॥२१२॥

[ अत· परं ग्रन्थस्य पत्रं नष्टम् । ]

। + ।

[ काव्या ]दिषु प्रतापादेर्लोकशास्त्रश्रुतेष्वपि ।
कवीनामेव समय प्रामाण्यमवगाहते ॥२१३॥

धातु(त)क्यशोकवन्धूकपाटलीकिंशुकादिभि ।
पिष्टैर्द्रव्यैस्तथान्यैरपिष्टहिङ्गुलकादिभि ॥२१४॥

प्रवालपद्मरागाद्यैर्मणिभेदैस्तथा परै ।
बालातपतडिद्वह्निशिखाप्रायैश्च तैजसै· ॥२१५॥

पदार्थसाम्ययोगेन बन्धे रक्तस्य वस्तुन· ।
समान(स)व्याससमय कार्य प्राच्येन वर्णना ॥२१६॥

इन्दीवरातकी(सी)प्रायै पुष्पैरलिपिकादिभि· ।
प्राणिभिर्मृगनाभ्याद्यैर्द्रव्यै किं व्यञ्जनादिभि ॥२१७॥

प्राण्यङ्गजन्मिभि केशपाशाद्यैरसितं तथा ।
खड्गादि वर्ण्यमान तु साम्ये प्राग् वर्त(र्ण)नां क्षिपेत् ॥२१८॥

श्वेतवस्तुषु हासादे रोषादे रक्तवस्तुषु ।
साम्येन योज्यमानस्य विज्ञेय कविकोविदै ॥२१९॥

## राजद्वारवर्णनवीजानि—

अतिष्ठच्च नातिदूरे राजभवनस्य निर्वर्तितस्नानाशनव्यतिकर·, विश्रान्तश्च मेखलकेन सह । याममात्रा[व]शेषदिवसे भुक्तवति भूभुजि प्रख्याताना क्षितिभुजां शिबिरसन्निवेशान् वीक्षमाण शनै शनै पट्टबन्धार्थमुपस्थापितैश्च डिण्डिमाधिरोहणायाहृतै-श्चाभिनवबद्धैश्च विक्षेपोपार्जितैश्च को(कौ)शलिकागतैश्च प्रथमदर्शनकुतूहलोपनीतैश्च नागवीथीपालप्रेषितैश्च दूतसम्प्रेषणप्रवेशितैश्च पल्लीपरिवृढढौकितैश्च स्वेच्छायुद्धक्रीडा-कौतुकाकारितैश्च दीयमानैश्चाच्छिद्यमानैश्च मुच्यमानैश्च यामावस्थापितैश्च सर्वद्वीप-

निर्गमिषया गिरिभिरिव सागरसेतुबन्धार्थमेकीभूतैरभ्रंजपटपटुपटद्दुकूलचामरगङ्गारागरमणीयैः पुष्पाभिषेकदिवसैरिव कल्पितवारणेन्द्रैः श्यामायमानम्, अनवरतचलितखुरपुटप्रहतधूमदर्शनैः मर्त्यमयिभिरिव राजहंसैरुपहसद्भिरिव स्वखुरपुटप्रसृतप्रकरपनाहृदासन जन(व)नडजटा दृप्ति नातिमात्रकारयद्भिरिव सधाहेषोहर्षहेषितनादेन च भयसमुत्पतद्भिरिव द्विपसकरस्फुरगरुपा पक्षायमाणस्पन्दनचामरमालैरभिनन्दितैश्च तुरङ्गैः स्वरूप्यमानम्, अन्यत्र प्रेषितैश्च प्रेष्यमाणैश्च प्रेषितप्रतिनिवृत्तैश्च बहुयोजनगमनागमनसैन्याश्रयवनीभिरिव करान्(टि)काकर्मभिः धेटिसमुल्लसद्गजनकस्तारकितैरिव सम्पातपश्चन्दरस्फणचामरिकारञ्जितकणपूरैः सरलोत्पलैरिव रक्तशाखिशाखैरनवरतक्षणक्षणायमानचारुचामीकरघु(घु)रघु(घु)रुकमालिकाजरत्करञ्जनैरिव रचितसुमुकर्णिकाकोशीतिभिः श्रवणोपान्तप्रेङ्खत्पञ्चरागवर्णोर्णाचित्रसूत्रजूटजटालैः कपिकपालकपिलैः क्रमेलकुलैः[1] कपिलायमानम्, अन्यत्र नरञ्जनस्थैरिव सम सुतपम पटवश्वसदनुभि कल्पपादपैरिव मुक्ताफलमालोपशोभमानानोकगुम्फतडागमण्डनैः नारायणनाभिपुण्डरीकैरिवाश्लिष्टगरुडपक्षैः क्षीरोदोदरैरिव धौतमानविद्रुमदण्डैः शेषफणाफलकैरिवोपरिस्फुरत्स्फारमाणिक्यमण्डपैः श्वेतगङ्गापुलिनैरिव राजहंसोपसेवितैरभिमतमिरिव निदाघसमय परिहरद्भिरिव सितच्छत्रैः प्रतापमापिबद्भिरिवातपत्रैश्चन्द्रलोकमयमिव जीवलोकं जनयद्भिः कुमुदमयमिव कालं कुर्वद्भिर्ज्योत्स्नामयमिव वासरं विरचयद्भिः[1] फेनमयीमिव दिवं दर्शयद्भिरकालकौमुदीसहस्राणीव सृजद्भिर(ह)हसद्भिरिव शतक्रतोरभिमुखं श्वेतायमानैरातपत्रमण्डलैः श्वेतद्वीपायमानम्, क्षणनष्टाष्टदिङ्मुखं च मुष्णद्भिरिव भुवनमालोपोल्लोलपदोल्लसितं दिनं (गता)शि(ग)सानीव कारयद्भिरसारयद्भिरिव कुन्दपंक्ति संपर्ककलहकारिणी कान्त्या स्थिति विकचविशदकाशवनपाण्डुरदशदिशं शरत्समयमिवो पपादयद्भिर्विमलन्ततुमयमिवान्तरिक्षमाविर्भावयद्भिः शशिकरशुचीनां चमरा चामराणां सहस्रैर्दोलायमानम्, अपि च हंसयूथायमानं करिकर्णशङ्खैः, कल्पलतावनायमानं कलशिकाभिः, माणिक्यमयूखराजिकानायमानं मायूरातपत्रैः मन्दाकिनीप्रवाहायमानमंशुकैः, क्षीरोदायमानं मरकतमयूखैः, अन्यमानाम्बुदिवसमिव पद्मरागाभासैः, उपमानापराम्बरमिवेन्द्रनीलप्रभापटलैः भारम्भमाणापूर्वनिशमिव महानीलमयूखान्धकारैः स्यन्दमानानेककालिन्दीसहस्रमिव गरुडमणिप्रभाप्रतानैः, अङ्गारराशिमिव पुष्परागरश्मिभिः केचिच्चामुनेश्वरणन्यस्तपवित्रवदनप्रतिबिम्बनिभेन प्रबलमरुच्चमानैर्लज्जया स्थानानीव विशद्भिः केचिद्दङ्गुलीविक्षिप्तशोभा क्षितेर्विकीर्यमाणकरनखकिरणकदम्बव्याजेन सचामराणीवार्पयद्भिः केचिदुर[ ]रत्नशोभायमानद्वनीलतरलप्रभापटैः स्वामिप्रकोपप्रशमनाय कण्ठकरमाणपो

---

1 अत्र पदे श्री 'फेनमयमिव वासरं विरचयद्भिः' इति लिखितम्, परं पुनरुक्तमर्थमिति परिहृतम्।

रिव कश्चिदुच्छ्वाससौरभभ्राम्यद्भ्रमरपटलान्धकारितमुखैरपहृतलक्ष्मीशोकधृतलम्बश्मश्रुभिरिवान्यै शेखरशेखरीयमानमधुपमण्डलै प्रणामविडम्ब्यमानाभयपलायमानमौलिभिरिव निर्जितैरपि[1] सुसमानितैरिवानन्यशरणैरन्तरान्तरा निष्पतता प्रविशता चान्तरप्रतीहाराणामनुमार्गप्रधावितानेकार्थिजनसहस्राणामनुयायिन पुरुषानश्रान्तै पुन पुन पृच्छद्भि 'भद्र, अद्य भविष्यति भुक्त्वास्थाने दास्यति दर्शन पर परमेश्वर, निष्पतिष्यति वा बाह्या कक्ष्याम्,' इति दर्शनाशया दिवस नयद्भिर्भुजनिर्जितै शत्रुमहासामन्तै समन्तादासेव्यमानम्, अन्यैश्च प्रतापानुरागागतैर्नानादेशजैर्महीपालै प्रतिपालयद्भिर्नरपतिदर्शनकालमध्यास्यमानम्, एकान्तोपविष्टैश्च जैनैरार्हतै पाशुपतैश्च पाराशरिभिश्च सर्वदेशजन्मभिश्च जनपदै सर्वाम्भोधिवेलावनवलयवासिभिश्च म्लेच्छजातिभि सर्वद्वीपान्तरगतैश्च दूतमण्डलैरुपास्यमानम्, सर्वप्रजानिर्माणभूमिमिव प्रजापतीना लोकत्रयसारोच्चयरचित चतुर्थमिव लोकम्, महाभारतशतैरप्यकथनीयसमृद्धिसभारम्, कृतयुगसहस्रैरिव कल्पितसन्निवेशम्, स्वर्गार्बुदैरिव विहितरामणीयकम्, राजलक्ष्मीकोटिभिरिव कृतपरिग्रह राजद्वारमगमत ।

[ हर्षचरिते द्वितीयोच्छ्वासे ]

योगैर्लग्नैश्च नक्षत्रैर्ग्रहैर्वारैश्च सप्तभि ।
लक्षणैर्जायते काव्यं बप्पभट्टिप्रसादत ॥२२०॥

**व्याख्या**—विष्कम्भाद्या योगा । योग इव सप्रीतिरायुष्मान् भवान् । सौभाग्यहृदय शोभन कर्मणि सर्वत्र सुकर्मा सधृति । शूलं दुष्कर्मकर्तृणाम् । इत्यादिभि पदैरुत्पद्यन्ते श्लेषा ।

तिथिरिव प्रतिपदाधिष्ठात्री । सदा द्वितीयालङ्कृत ।

साक्षाल्लग्नमय इव सवृष सिंहभासुर सधनु समकर —इत्यादि । सल्लग्नोऽपि न मेषारूढ इति ।

नक्षत्रश्लेषा अश्विनीसेनाबन्धुर । सन्मार्ग साद्र नक्षत्रमयोऽपि न रौद्रचावशयाश्रित सकर सचित्र सज्येष्ठो मूलाधिष्ठित सुश्रवण —इत्यादि ।

[ग्रहश्लेषा —] सूर्य इव सुदिनकर । स वा सोम स मङ्गलो बुधाधिष्ठित स गुरु स कवि शनैश्चरोऽपि न मन्द —इत्यादि ।

लक्षणमय इव सुस्वर समानवचन सुवर्णसवर्ण ।
पूर्वो ह्रस्व परो दीर्घो जिनेन्द्र तव दर्शनात् ।

---

१ प्रतौ 'निस्तर्जितैरपि' इति पाठ ।

पूर्वोऽभ्यासस्तवारीणां संग्रामे यत् पलायनम् ।
इदानीं द्वयमभ्यस्तं मन वासो दरिद्रता ॥२२१॥
पूर्वोऽभ्यास समस्तोऽपि रूपसिद्धौ गतो मम ।
इदानीं द्वयमभ्यस्तं भोजने शयने तथा ॥२२२॥
पण्याच्छिल्पान्नियोगाच्च क्रीतादेरायुधादपि ।
वित्तमादाय लोकोऽयं सर्वे स्त्रीषु निमज्जति ॥२२३॥
इदमि स्यामसमाप्येर्व सर्वेत्रर्ममतं मतम् ।
दन्दहीति मनोऽरण्यं कामिनां कथमन्यथा ॥२२४॥
स्यातां यदि पदे द्वे तु यदि वा स्युर्बहून्यपि ।
तथापि बद्धमुष्टित्व न त्यजन्ति नियोगिनः ॥२२५॥
स्त्री नदीवदिदं सर्वं रसनार्गलिता सती ।
यतो ध्वंसं विधत्तेऽसौ कूलवत् कुलयोर्द्वयो ॥२२६॥
गुणवाधिका न वृद्धिः प्रकृतिप्रत्ययविभक्तिलोपो वा ।
न भवति तथापवादो न व्याकरणस्थितिरिदानीम् ॥२२७॥
दुष्पिधातोरिवास्माकं दोषनिष्पत्तये गुण ।
यस्य गोप्ट किं कुर्मः कर्मणामीदृशी गतिः ॥२२८॥

तथा चौहल्लाटसन्ध्यक्षराणि वाच्य । सम्यग्व्यञ्जना सुमोघना', परापवादे चपोपा योपयस्य कृत्येन, अन्तःस्था धर्मेषु येषु, सोष्माण परविग्रहेषु, सर्वदा लिङ्गप्रकाशितविभक्तय सदागमा सश्रद्धा प्रकाशितसर्वस्यसर्वनामान सत्कारका ईप्सिता धरक्षका संप्रदानप्रगुणा योधा वैयाकरणा इवाधिकरणप्रिया । पुनश्च पूर्वकर विश्लिष्टकरणा शुभकर्माण सहेतव । द्विगुना तत्पुरुषेणाभिष्टिता लभ्यमानबहुव्रीहय केदारा' । इन्द्ररथा क्षत्रिया ससन्धिता कृताख्यप्रत्यया सव्ययम ।

ये ददति परस्मैपदं नात्मनेपदम् । क्रियामात्रा वर्तमानेन वर्तन्ते न परोक्षाचारेण सप्रयोगा सानुमतय । आचाराक्लम्बोपमाना न द्विरुक्तिप्रिया कृतसंप्रसारणा' परपाम् । गुणिन ससिसय— इत्यादि लक्षणपदै प्रज्ञानुमानस्य काव्यम् ।

इति काव्यतत्त्वबीजं हृदयस्थमनुप्तमनुसरसमितम् ।
उत्पादयति मनोज्ञं यशःफलं चिन्त्यमहनीयम् ॥२२९॥
इत्याचार्यश्रीविनयचन्द्रविरचितायां काव्यशिक्षायां
विनयाङ्काया बीजव्यावर्णना नाम चतुर्थ परिच्छेद ॥

१ छन्दः—शहस्ल [ ख ]।

# ५. अनेकार्थशब्दसंग्रहपरिच्छेदः ।

## (१) एकाक्षरकाण्डः ।

[ अत्र ग्रन्थस्य पत्रे विनष्ट, अयं काण्डो लुप्त' । ]

## (२) द्व्यक्षरकाण्डः

[ नष्टे पत्रे, अस्य काण्डस्य कश्चिदारम्भिकोऽशो लुप्त । तत. परम्—]

[ **नागो** ] मतङ्गजे सर्पे पुन्नागे नागकेसरे ।
क्रूराचारे नागदन्ते मुस्तके वारिदेऽपि च ॥१॥

**फल्गुः** काकोदुम्बरिकावृक्षे निरर्थकेऽपि च ।
**भगो**ऽर्क-ज्ञान-माहात्म्य-यशो-वैराग्य-मुक्तिषु ॥२॥

रूप-वीर्य-प्रयत्नेच्छा-श्री-धनैश्वर्य-योनिषु ।
राज्ये वेश्याभृतौ **भोगः** सुखे च सर्पविग्रहे ॥३॥

पालना-ऽभ्यवहारे च फणेऽष्टासु निगद्यते ।
**मार्गो** मृगमदे मासे सौम्यर्क्षेऽन्वेषणे पथि ॥४॥

**मृगः** कुरङ्गे याच्ञायां मृगयाया गजान्तरे ।
पशौ नक्षत्रभेदे च **मृगी** तु वनितान्तरे ॥५॥

अलब्धलाभे सङ्गत्यां कार्मण-ध्यान-युक्तिषु ।
वपु -स्थैर्य-प्रयोगेषु सन्नाहे भेषजे धने ॥६॥

विष्कम्भादावुपाये च **योगो** विस्रम्भघातिने(नि) ।
नृत्य-युद्धक्षितौ **रङ्गो** **रागः** स्याल्लोहितादिषु ॥७॥

गान्धारादौ च क्लेशाद्येऽनुरागे मत्सरे नृपे ।
**वङ्गः** कर्पासे वृन्ताके **वङ्गा** जनपदान्तरे ॥८॥

रय-प्रवाहयो**र्वेगः** **शृङ्गं** चिह्न-विषाणयो ।
क्रीडाम्बुयन्त्रे शिखरे प्रभुत्वोत्कर्ष-सानुषु ॥९॥

उत्साहे निश्चयेऽध्याये मोहा-ऽनुमति-सृष्टिषु ।
त्याग-स्वभावयो' **सर्गः** स्या**दर्घो** मूल्य-पूजयो ॥१०॥

दुर्मैत्री-व्यसनेऽघ स्याद् मघस्तु मुस्तकाब्दयोः ।
दीन निष्फल्योर्मोघो माघा स्यात् पाटलातरौ ॥११॥

श्लाघोपास्तीच्छयो स्तोत्रेऽर्चा पूजा-प्रतिमास्वपि ।
कच शुष्कव्रणे केशे बन्धे पुत्रे च गीष्पते ॥१२॥

काञ्ची गुञ्जा-मेखलयो पुर्यां क्रौञ्चा द्वीप खग ।
चर्चा स्याच्चर्ममुण्डाया चिन्ता-स्थासकयोरपि ॥१३॥

मोचा शाल्मलि-कदल्योर्नीचः पामर-खर्वयो ।
अजश्छागे हर विष्णौ रघुजे वेधसि स्मर ॥१४॥

अब्जो धन्वन्तरौ चन्द्रे शङ्खेऽब्ज पद्म-संख्ययो ।
द्विजो विप्र-क्षत्रिययोर्वैश्ये दन्ते विहङ्गमे ॥१५॥

गुञ्जा तु कृष्णलायां स्यात् पटहे मधुरध्वनौ ।
दिह्ने चिह्ने पताकायां ध्वजः पूर्वदिशो गृहे ॥१६॥

शौण्डिकेऽपि च मद्वाहे निजो नित्य-स्वकीययो ।
सन्ततौ च प्रजा लोके बले बीजं तु रेतसि ॥१७॥

स्यादाधान च तत्त्वे च हेतावङ्कुरकारणे ।
भुजा बाहौ करे मर्जः कुब्जो च रजकेऽपि च ॥१८॥

राजी रमायां पङ्क्तौ च रजा स्वामम-माङ्गयो ।
मानास्तु पदधान्य स्युर्मानः स्यादार्द्रमण्डुक ॥१९॥

उशीरके पुनर्नामे गोप्य-संघा-ऽप्ययु प्रभ ।
वाणिज्ये करणभेदे वणिग् वाणिज्यमौलिनि ॥२०॥

व्याजः शाठ्येऽपदेशे च वाजं सर्पिपि वाणिणि ।
यथान्य वाजस्तु पक्षे मुनौ निस्वन-वेगयो ॥२१॥

मञ्जुः पो च कण्ठ च सर्जो सन्नद्धसम्पत्तो ।
यज्ञः स्यात्मनि यत नारायण-हुताशयो ॥२२॥

संज्ञा नामनि गायत्र्यां हस्तादेर्भिसूचन ।
चेतना-ऽर्कप्रियोर्नूनं संज्ञा धियां प्रकीर्तिता ॥२३॥

**अट्टो** हट्टा-ऽट्टालकयोर्भृशे चतुष्क-भक्तयो ।
**काण्डो** नालेऽधमे वर्गे द्रुस्कन्धेऽवसरे शरे ॥२४॥

सह-श्लाघा-ऽम्बुषु स्तम्बे **क्रीडा** केल्यामनादरे ।
**गुडः** कुञ्जरसन्नाहे गोलकेक्षुविकारयोः ॥२५॥

**भाण्डं** मूलवणिग्वित्ते तुरङ्गाणां च मण्डने ।
नदीकूलद्वयीमध्ये भूषणे भाजनेऽपि च ॥२६॥

**ऊर्णा** भ्रूमध्यगावर्ते मेषादीनां च लोमनि ।
**ऋणं** देये जले दुर्गे **कणो** धान्यांश-लेशयो ॥२७॥

**कणा** जीरक-पिप्पल्योः **कर्ण**श्चम्पापतौ श्रुतौ ।
**क्षणः** कालविशेषे स्यात् पर्वण्यवसरे महे ॥२८॥

**कृष्णा** तु नील्यां द्रौपद्यां पिप्पली-द्राक्षयोरपि ।
जिनेन्द्र-पूज्ययोर**र्हत्** **कान्ता** प्रियङ्गु-योषितो ॥२९॥

**कीर्ति**र्यशसि विस्तारे प्रासादे कर्दमेऽपि च ।
**कृतं** पर्याप्त-युगयो **केतु**र्द्युति-पताकयो ॥३०॥

पितृ-सगोत्रयोर्**ज्ञाति**स्**तिक्त**श्च सुरभौ रसे ।
**धृति**र्योगविशेषे स्याद्धारणा-धैर्ययो सुखे ॥३१॥

सतोषा-ऽध्वरयोश्चापि **पङ्क्ति**र्गौरव-पाकयो ।
**पूर्त्तं** पूरितखाताद्योर्**वृति**र्वरण-वाटयोः ॥३२॥

**सूतः** पारद-सारथ्योर्**गाथा** वाग्भेद-वृत्तयो ।
**तीर्थं** शास्त्रे गुरौ यज्ञे पुण्यक्षेत्रा-ऽवतारयो ॥३३॥

ऋषिजुष्टे जले सत्रिण्युपाये स्त्रीरजस्यपि ।
योनौ पात्रे दर्शनेषु [**पीथो**ऽर्के **पीथ**मम्बुनि] ॥३४॥

**रथ**स्तु स्यन्दने पादे शरीरे वेतसद्रुमे ।
**छन्दो** वशेऽभिप्राये च **भसद्**भास्वर-मांसयोः ॥३५॥

दुर्मनो-व्यसनेऽघः स्याद् मेघस्तु मुस्तकाब्दयो ।
दीन-निष्फलयोर्मोघो मोघा स्यात् पाटलातरौ ॥११॥

श्लाघापात्रतीक्ष्ण्यो स्तोत्रेऽर्चा पूजा-प्रतिमास्वपि ।
कचः शुष्कव्रणे केशे बन्धे पुत्रे च गीष्पते ॥१२॥

काञ्ची गुञ्जा-मेखलयो पुर्यां क्रौञ्चा द्वीपे खगे ।
चर्चा स्याच्चर्ममुण्डाया चिन्ता-स्थासकयोरपि ॥१३॥

मोचा शाल्मलि-कदल्योर्नीचः पामर-खर्वयो ।
अजश्छागे हरे विष्णौ रघुजे वेधसि स्मरे ॥१४॥

अब्जो धन्वन्तरौ चन्द्रे शङ्खेऽब्ज पद्म-संख्ययो ।
द्विजो विप्र-क्षत्रिययोर्वैश्ये दन्ते विहङ्गमे ॥१५॥

गुञ्जा तु कृष्णलायां स्यात् पटहे मधुरध्वनौ ।
शिल्पे चिह्ने पताकायां ध्वज पूर्वदिशो गृहे ॥१६॥

शौण्डिकेऽपि च मद्याङ्गे निजा नित्य-स्वकीययो ।
सन्ततौ च प्रजा लोके कले बीजं तु रेतसि ॥१७॥

स्यादाधाने च तत्त्वे च हेताबङ्कुरकारणे ।
भुजो बाहौ करे भर्जू कुब्जौ च रजकेऽपि च ॥१८॥

राजी रेखायां पङ्क्तौ च रुजा त्वामय-भङ्गयो ।
लाजास्तु भ्रष्टधान्ये स्युर्लाजः स्यादार्द्रतण्डुले ॥१९॥

उशीरके पुनर्लाजं गोप-संघा-ऽध्वसु व्रजः ।
वाणिज्ये क्रयणमदे वणिग् वाणिज्यजीविनि ॥२०॥

व्याज शाठ्ये-ऽपदेशे च वाजं सर्पिषि वारिणि ।
यज्ञान्ने वाजस्तु पक्षे मुनौ निस्वन-वेगयो ॥२१॥

मज्ञ पो च कृष्ण च मज्ञो सन्नसम्पतो ।
यज्ञ स्यादात्मनि मम नारायण-हुताशयो ॥२२॥

संज्ञा नामनि गायत्र्यां हस्ताद्यैरर्थसूचन ।
चेतना-ऽर्कस्त्रियोर्नूनं संज्ञा प्रिया प्रकीर्तिता ॥२३॥

**वालको**ऽङ्गे शिशौ केशे वाजि-वारणवालधौ ।
अङ्गुलीयक-ह्रीवेर-पारिहार्येषु **वालकम्** ॥४७॥

**पिनाको** हरकोदण्डे पांशुवर्ष-त्रिशूलयोः ।
**मोदको** हर्षके ज्ञेयः खाद्यभेदे च **मोदकम्** ॥४८॥

**रूपकं** नाटके धूर्ते काव्यालङ्करणेऽपि च ।
**कौशिको** नकुले व्यालग्राहे गुग्गुल-शक्रयोः ॥४९॥

**नालीकं** पद्मखण्डेऽब्जे **नालीकः** शर-शल्ययोः ।
**नन्दको** हरिखड्गे च हर्षके कुलपालके ॥५०॥

**तूलिका** कथिता लेख्यकूर्चिका-तूलशय्ययोः ।
**ऊर्मिका** त्वङ्गुलीये स्याद् वस्त्रभङ्ग-तरङ्गयोः ॥५१॥

**अलर्को** धवलार्के स्याद् योगोन्मादितशुन्यपि ।
**आतङ्को** रुजि शङ्कायां सन्तापे मुरजध्वनौ ॥५२॥

**कुलकः** कुलप्रधाने वल्मीके काकतिन्दुके ।
**चित्रकस्तु** चित्रकाये द्रुमौषधिविशेषयोः ॥५३॥

**पताका**ऽङ्के ध्वजे केतौ सौभाग्ये नाटकांशके ।
**भूमिका** तु रचनायां रूपान्तरपरिग्रहे ॥५४॥

**स्वस्तिको** मङ्गलद्रव्ये गृहभेद-चतुष्कयोः ।
**दुर्मुखो** मुखरे नागराजे वाजिनि वानरे ॥५५॥

जातीफले नरश्रेष्ठे **पुन्नागः** पादपान्तरे ।
**कवचस्तु** तनुत्राणे पटहे नन्दिपादपे ॥५६॥

**कुक्कुटः** कुक्कुभे ताम्रचूडे वह्निकणेऽपि च ।
प्रतापिनि **प्रचण्डः** स्यात् **प्रकाण्डः** स्तम्ब-शस्तयोः ॥५७॥

**आषाढो** मलयगिरौ व्रतिदण्डे च मासि च ।
शच्यां निर्गुण्ड्या**मिन्द्राणी** ललनाकरणेऽपि च ॥५८॥

**करुणा** तु कृपायां स्यात् **करणं** क्षेत्र-गात्रयोः ।
गीताङ्गहारसंवेशभित्सु कायस्थसंहतौ ॥५९॥

मन्दो मूढे शनौ रोगिण्यलसे भाग्यवर्जिते ।
गमनातिप्रमेदेऽन्ये स्वैरे मन्दरते स्मृतः[1] ॥३६॥

—०—  —०—

[हंसोऽर्के मत्सरेऽच्युते ॥३७॥

स्मृता]श्चयोनि-मन्त्रादिभेदेषु परमात्मनि ।
निर्लोभनृपतौ प्राणवाते श्रेष्ठेऽश्रुत स्थित ॥३८॥

इति [द्व्यक्षरा] द्वितीय काण्ड ।

(३) त्र्यक्षरकाण्ड ।

कनकं चम्पके स्वर्णे धत्तूरे नागकेशरे ।
कालीये काञ्चनारे च दाडिमे च कमण्डलौ ॥३९॥

नरको निरये दैत्ये सीधुपाने च सीधुनि ।
जनकः पितृ-राजर्षौ युतकं संशये युगे ॥४०॥

कृषि(प)कः कर्षके फाले रजका धावके शुके ।
मधुको बन्दिभेदे स्याद्गुणको निपुणा-ऽन्ययो ॥४१॥

मियकः पीनशाखे स्यान्नीपे चित्रमृगेऽखिनि ।
यमकं यमये शब्दालङ्कारे संयमेऽपि च ॥४२॥

तिलकं चित्रके प्राहु कुलिको नागभेदके ।
कुशिकः स्यान्मुनौ तैलशाखे सर्जा-ऽश्वकर्णयो ॥४३॥

कटकं कम्ये सानौ राजधानी-नितम्बयो ।
रुचकं मण्डमाल्ये ग्रीवाभरण-दन्तयो ॥४४॥

आदर्श मानभे स्यात् सुवर्णमाडकी मता ।
तारक कर्णधारे च दृश्ये दृशि च तारकम् ॥४५॥

कनीनिकायां नक्षत्रे तारकं तारकमपि च ।
नायका भर्तरि श्रेष्ठे हारमध्यमणावपि ॥४६॥

---

१ अतः परं ग्रन्थस्य पत्रं नष्टम् ।

**धावनं** तु गतौ शौचे **पद्मिनी** योषिदन्तरे ।
**विटपः** पल्लवे स्तम्बे विस्तारे पिङ्ग-शाखयो ॥७३॥

**वृषभः** स्यादादिजिने वृष-पुङ्गवयोरपि ।
**गौतमो** गणभृद्भेदे शाक्यसिंहर्षिभेदयो ॥७४॥

**सुपीमः** शिशिरे रम्ये **सत्तमः** श्रेष्ठ-पूज्ययो. ।
**विदुरो** नागरे धीरे धृतराष्ट्रानुजेऽपि च ।
**अङ्गुलिः** करशाखाया कर्णिकायां गजस्य च ॥७५॥

## इति त्र्यक्षरः काण्डस्तृतीयः ।

## (४) चतुरक्षरकाण्डः ।

**अलमकः** पिके भृङ्गे मधुके पद्मकेसरे ।
**वलाहको** गिरौ मेघे दैत्य-नागविशेषयो ॥७६॥

**वृन्दारकः** सुरे श्रेष्ठे मनोज्ञे च [प्र]कीर्तित' ।
**नियामकः** कर्णधारे पोतवाहे नियन्तरि ॥७७॥

**विनायकस्तु** हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ ।
**भट्टारकः** सुरे राज्ञि कथितश्च तपोधने ॥७८॥

**दासेरकः** स्यात् करभे दासीपुत्रे च धीवरे ।
**कृकवाकुस्ताम्रचूडे** मयूर-कृकलासयो ॥७९॥

**गोमेदकं** पीतरत्ने काकोले पत्रकेऽपि च ।
सहकारे गणधरे **पुण्डरीकोऽ**ग्निदिग्गजे ॥८०॥

**पुण्डरीकं** सिताम्भोजे राजिलाहौ गजज्वरे ।
कोशकारान्तरे व्याघ्रे **वलाहकोऽ**म्बुदे गिरौ ॥८१॥

दैत्ये नागे च निर्दिष्टो **भयानकस्तु** भीषणे ।
**महाशङ्खो** निधिभेदे सख्याभेदे नरास्थनि ॥८२॥

**शिलीमुखोऽ**लौ बाणे **चापवर्गस्त्**याग-मोक्षयो ।
**संप्रयोगो** निधुवने सम्बन्धे कार्मणेऽपि च ॥८३॥

वर्णाना स्पष्टसादौ च योगिनामासनादिषु ।
दर्पीके साधकतमे भवादौ च कलावपि ॥६०॥

कङ्कणं करभूषासु कल्याणं हेम्नि मङ्गले ।
काकिणी मानदण्डे स्यात् तुरीयांशे पणस्य च ॥६१॥

तरुणः कुम्भवृक्षे स्यादेरण्डे यूनि नूतने ।
निर्वाणं मोक्ष-निर्वृत्योर्विध्याते करिमज्जने ॥६२॥

पक्षिणी पूर्णिमा-स्नग्यो शाकिनी-रात्रिभेदयो ।
श्रवणा नक्षत्रभेदे श्रवणे श्रवसि श्रुतौ ॥६३॥

सुपर्णो विष्णु-सुग्रीववैनयो करमर्दके ।
हरिणौ पाण्डु-सारङ्गौ सुपर्णं कृतमालके ॥६४॥

अजितस्तीर्थकृद्भेदे बुद्धे विष्णावनिर्जिते ।
अनन्तं खे निरवधावनन्तस्तीर्थकृद्धिदि ॥६५॥

अथायतिः स्यात् प्रभावोत्तरकालसमागमे ।
आसत्ति संगमे लाभेऽप्यापत्तिः प्राप्ति-दोषयो ॥६६॥

किरातः स्यादल्पतनौ भूनिम्ब-म्लेच्छयोरपि ।
गापति शङ्करे षण्ढ नृपतौ त्रिदशाधिपे ॥६७॥

सहस्रकिरणे चापि जगती छन्दसि क्षितौ ।
निशान्तं सदने शान्ते प्रभातेऽपि निगद्यते ॥६८॥

पर्वतो गिरि-देवर्ष्यो पक्षतिः प्रतिपत्तिथौ ।
वसति स्यादवस्थान निशायां सदनेऽपि च ॥६९॥

विनत प्रणते भुग्न विनता पिटिकाभिदि ।
सिद्धार्थः सर्षप शाक्यसिंहेऽप्यन्यजिनवत्सरि ॥७०॥

सम्पाप सङ्कटे योनी अर्जुनः पार्थहैहय ।
कुण्डली वरुण सर्पे मयूर पुष्पन्यास्वित ॥७१॥

दर्शनं दर्पण धर्मोपलम्भ्योर्बुद्धि शास्त्रयो ।
स्तन-मोचनयोश्चापि दमने धर्म-न्यायो ॥७२॥

**धावनं** तु गतौ शौचे **पद्मिनी** योषिदन्तरे ।
**विटपः** पल्लवे स्तम्बे विस्तारे पिङ्ग-शाखयो ॥७३॥

**वृषभः** स्यादादिजिने वृष-पुङ्गवयोरपि ।
**गौतमो** गणभृद्भेदे शाक्यसिंहर्षिभेदयो ॥७४॥

**सुषीमः** शिशिरे रम्ये **सत्तमः** श्रेष्ठ-पूज्ययो ।
**विदुरो** नागरे धीरे धृतराष्ट्रानुजेऽपि च ।
**अङ्गुलिः** करशाखाया कर्णिकायां गजस्य च ॥७५॥

इति त्र्यक्षरः काण्डस्तृतीयः ।

## (४) चतुरक्षरकाण्डः ।

**अलमकः** पिके भृङ्गे मधुके पद्मकेसरे ।
**बलाहको** गिरौ मेघे दैत्य-नागविशेषयो. ॥७६॥

**वृन्दारकः** सुरे श्रेष्ठे मनोज्ञे च [प्र]कीर्तित ।
**नियामकः** कर्णधारे पोतवाहे नियन्तरि ॥७७॥

**विनायक**स्तु हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ ।
**भट्टारकः** सुरे राज्ञि कथितश्च तपोधने ॥७८॥

**दासेरकः** स्यात् करभे दासीपुत्रे च धीवरे ।
**कृकवाकु**स्ताम्रचूडे मयूर-कृकलासयो ॥७९॥

**गोमेदकं** पीतरत्ने काकोले पत्रकेऽपि च ।
सहकारे गणधरे **पुण्डरीको**ऽग्निदिग्गजे ॥८०॥

**पुण्डरीकं** सिताम्भोजे राजिलाहौ गजज्वरे ।
कोशकारान्तरे व्याघ्रे **बलाहको**ऽम्बुदे गिरौ ॥८१॥

दैत्ये नागे च निर्दिष्टो **भयान**कस्तु भीषणे ।
**महाशङ्खो** निधिभेदे सख्याभेदे नरास्थनि ॥८२॥

**शिलीमुखो**ऽलौ बाणे **चापवर्ग**स्त्याग-मोक्षयो ।
**संप्रयोगो** निधुवने सम्बन्धे कार्मणेऽपि च ॥८३॥

द्विजराजस्तु शशे स्यात् सार्वभौमेऽपि च निशाकरे ।
धर्मराजस्तु सुगते श्राद्धदेवे युधिष्ठिरे ॥८४॥

भारद्वाज पक्षिभेदे बृहस्पतिसुतेऽपि च ।
तुलाकोटिर्मानभेदेऽर्बुदे स्यान्नूपुरेऽपि च ॥८५॥

कलकण्ठ पिके पारावते हंसे कलध्वनौ ।
वैतरणी प्रेतनद्यां जनन्यामपि रक्षसाम् ॥८६॥

शिखरिणी वृत्तभेदे रोमाली-पेयभेदयो ।
दिवाभीतः काकरिपौ कुम्भिल कुमुदाकर ॥८७॥

नागदन्तो हस्तिदन्ते गेहान्निसृतदारुणि ।
प्रजापतिर्ब्रह्म-राज्ञोर्जामातरि दिवाकर ॥८८॥

वह्नौ त्वष्टरि दक्षादौ प्रतिकृतिस्तु पूजने ।
पुष्पदन्तस्तु दिग्नागे जिनभेदे गणान्तर ॥८९॥

आश्वासबन्धः समाश्वासे मर्कटस्य च वासके ।
महानादो महाकाव्ये महाध्वाने शयानके ॥९०॥

आस्कन्दनं तिरस्कारे संशोषण-समीकयो ।
वर्धमानो वीरजिने स्वस्तिकैरण्ड-विष्णुषु ॥९१॥

प्रभभेदे शरावे च विष्वक्सेना जनार्दने ।
अनुशयः पश्चात्तापे दीर्घद्वेषा ऽनुबन्धयो ॥९२॥

अवतारस्तु नद्यादितीर्थेऽवतरेऽपि च ।
उपचारस्तु लञ्चायां कुम्भकारः प्रजापतौ ॥९३॥

घनसारस्तु कर्पूरे दक्षिणावर्तपारदे ।
चक्रधरा विष्णु-सर्प-चक्रिषु ग्रामजालिनि ॥९४॥

दण्डधारो यमे राज्ञि दिगम्बरस्तु शङ्करे ।
दक्षयामा यमपुर्गमने मोमन्ऽपि च ॥९५॥

द्वैमातुरो जरासन्धे हेरम्बे परिकीर्तितः ।
सनिमरः चमूराज निषाम्य कम्बुग्रयो ॥९६॥

बलभद्रस्त्वनन्ते स्यान्महावीरो जिने भटे ।
रागसूत्रं पट्टसूत्रे तुलासूत्रेऽपि च क्वचित् ॥९७॥

समाहारस्तु संक्षेप एकत्रकरणेऽपि च ।
मणिमाला स्त्रियां हारे दगनक्षतभिद्यपि ॥९८॥

मुक्ताफलं घनसारे मौक्तिके लवलीफले ।
जीवितेशः प्रिये मृत्यौ पलंकषा च किंशुके ॥९९॥

कलहंसो राजहंसे कादम्बे नृपसत्तमे ।
गन्धवहो मृगे वाते तमोपहो जिने रवौ ॥१००॥

इति चतुरक्षरः चतुर्थः काण्डः ।

(५) पञ्चाक्षरकाण्डः[1] ।

स्यादाच्छुरितकं हास-नखघातविशेषयो ।
जलकरङ्कः स्यान्मेघे नालिकेरतरो फले ॥१०१॥

कथाप्रसङ्गो वातूले विषस्य च चिकित्सके ।
वृषभध्वजः प्रथमजिनेन्द्रे शशिशेखरे ॥१०२॥

तमालपत्रं तिलके तापिच्छे पत्रकेऽपि च ।
अर्धपारावतश्चित्रकण्ठे स्यात् तित्तिरावपि ॥१०३॥

इति पञ्चाक्षरः पञ्चमः काण्डः ।

(६) अव्ययार्थकाण्डः[2] ।

[एकस्वराः—अ स्वल्पार्थेऽप्यभावेऽपि । यथा—]

अ—अल्पमपि प्रत्याख्यानमावृण्वन्ति अप्रत्याख्यानावरणा क्रोधादय । अभावे यथा—असगय क्षत्रपरिग्रहक्षमा० [अभिज्ञान० १,२२] ।

अथ आकारौ—स्यादा स्मरण-वाक्ययो । स्मरणे यथा—आ ज्ञात मधुलम्पटैर्मधुकरै इति । वाक्ये यथा—आ एव नु मन्यसे ।

---

१ अय तु पञ्चाक्षर शब्द. ।

२ अय काण्डो बहुशोऽनेकार्थसंग्रहस्य परिशिष्टकाण्डादुद्धृतो दृश्यते ।

इ स्यात् खेदे प्रकोपोक्तौ । यथा—अस्य कण्ठे इ ईक्षिता ।
ई क्रोधे दुःखभावने । यथा—ई दृशि रति कथम् ।
उ रोषोक्त्यामन्त्रणार्थयो । यथा—उ मा इति [कुमार० १,२६]

ऊं प्रश्नेऽङ्गीकृतौ रोषे ।

ऋ कुत्सावाक्ययो ए-ऐ है हेशब्दाविव स्मृतौ ।
ओ औशब्दौ तु होहौवत् हतौ सम्बोधनेऽपि च ॥ १०४ ॥

कं सुखे वारि शिरसो किं प्रश्ने कुत्सनेऽपि च ।

अथ चादिः—

चान्योऽन्यार्थसमाहारान्वाचयेषु समुच्चये ॥१०५॥

हेतौ पक्षान्तरे तुल्ययोगिता विनियोगयो ।
पादपूरणेऽवधृतौ तु विशेषेऽवधारणे ॥१०६।

समुच्चये पादपूर्तौ धिग् निर्भर्त्सननिन्दयो ।
नि स्यात् क्षेपे भृशार्थे च निश्चयार्थे दान[कर्मणि] ॥१०७॥

[द्विस्वराः—]

यद्वत् प्रश्नवितर्कयो ।
सकृत् सहैकवारयो ।
स्वस्त्याशी-क्षेम-पुण्यादौ साक्षात् प्रत्यक्ष-तुल्ययो ।
हन्त दानेऽनुकम्पायां वाक्यारम्भ-विषादयो ॥१०८॥

अथो अथ समुच्चये ।
अन्वादेशे प्रतिज्ञायां प्रश्न-साकल्ययोरपि ।
तथा स्यान्निश्चये पृष्टप्रतिवाक्ये समुच्चये ॥१०९॥

यथा निदर्शने द्वौ तूद्देशे निर्देश-साम्ययो ।

द्वौ तु यथा-तथाशब्दौ ।

वृथा त्वविधौ स्यादनर्थके ।
अनु लक्षण-वीप्सेत्थम्भूतभागेषु सन्निधौ ।
सादृश्या-ऽऽयाम-हीनेषु पश्चादर्थ-सहार्थयो ॥११०॥

**नन्वा**क्षेपे परिप्रश्ने प्रत्युक्तावववधारणे ।
वाक्यारम्भेऽप्यनुनयामन्त्रणा-ऽनुज्ञयोरपि ॥१११॥

**नाना** विनोभयानेकार्थेषु **स्थाने** तु कारणे ।
युक्ते साम्येऽप्य**प** स्तेयेऽपकृष्टे वर्जने मुदि ॥११२॥

विपर्यये च योगे च निर्देशे विकृतावपि ।
**अपि** सम्भावना-शङ्का-गर्हणासु समुच्चये ॥११३॥

प्रश्ने युक्तपदार्थेषु कामचारक्रियासु च ।
**उपा**सन्नेऽधिके हीने सादृश्य-प्रतियत्नयो ॥११४॥

**अभि** वीप्सा-लक्षणयोरित्थभूता-ऽऽभिमुख्ययो॰ ।
स्याद्**मा** सन्निधानार्थे [सहार्थे]ऽलं निवारणे ॥११५॥

अलंकरण-सामर्थ्य-पर्याप्तिष्ववधारणे ।
**एवं** प्रकारेऽङ्गीकारेऽवधारण-समुच्चयो ॥११६॥

**कथं** प्रश्ने प्रकारार्थे सम्भ्रमे संभवेऽपि च ।
**किमु** संभावनायां विमर्शे **जोषं** सुखे स्तुतौ ॥११७॥

मौन-लङ्घनयोश्चापि **नाम** प्राकाश्य-कुत्सयो ।
संभाव्या-भ्युपगमयोरलीके विस्मये क्रुधि ॥११८॥

**नूनं** तर्के निश्चिते च **प्राध्वं** नर्मा-ऽनुकूलयो ।
**भृशं** प्रकर्षेऽत्यर्थे च **सामि** त्वर्द्धे जुगुप्सिते ॥११९॥

**अयि** प्रश्नेऽनुनये स्याद् **अये** क्रोध-विषादयो॰ ।
संभ्रमे स्मरणे **चान्तरन्ते** स्वीकार-मध्ययो ॥१२०॥

**ऊरर्युरी चोररी** च विस्तारेऽङ्गीकृतावपि ।
**परा**भिमुख्ये प्राधान्ये विमोक्ष-प्रातिलोम्ययो ॥१२१॥

**किल** सभाव्य-वार्तयो **खलु** वीप्सा-निषेधयो ।
**नीचैः** स्वैरा-ऽल्प-नीचेषु **प्रादुर्**नाम-प्रकाश्ययो ॥१२२॥

[ **पुरो**ऽग्रे प्रथमे च स्यात् ] **मिथो**ऽन्योन्य रहस्यपि ।
**अह** क्षेपे नियोगे च **आहो** प्रश्न-विचारयो ॥१२३॥

सह संबन्ध-सादृश्य-यौगपद्य-समृद्धिषु ।
ननु च प्रश्न दुष्टोक्तौ [ सम्यग्वादे स्तुतावपि ] ॥१२४॥

अथ त्रिस्वराः—

अपकृष्ट चारौ निर्दोषे किमुत प्रश्न-वादयो ।
विकल्पेऽतिशये चापि पुरस्तात् प्रथमेऽग्रत ॥१२५॥
[ पूर्वस्यां च पुरार्थे ] चामीप्यं शीघ्र-प्रकषयो ।
पौन पुन्ये सन्तते च साम्प्रत तूचितेऽधुना ॥१२६॥
समया निकष(षा) चान्तर्निकटे चान्तरा [ पुन ] ।
विनार्थे सन्निधौ मध्येऽमितोऽभिमुख-कार्त्स्न्ययो ॥१२७॥
अदृश्यत्वमुत सदे[ऽन्तरणान्तर्विनार्थयो ] ।

[ चतु:स्वरा —]

अहोपतानुकम्पायां सदा-ऽऽमन्त्रणयोरपि ॥१२८॥

इत्यव्ययार्थः[1] [ षष्ठ ] काण्डः ।

(७) मूलाक्षरार्थकाण्डः ।

क: के .. ।
स्वमिन्द्रिये नै[गर] ॥१२९॥

(८) [ अन्त्याक्षरवर्गकाण्डः । ]

\+ \+ \+

[चक०]

[मिमिन्दु]चाऽनिल चौरे जलसृ[चि]र्मत्स्यौकसे ।

[ चच० ] रतनारीच इत्येष कथितो रतिबन्धम ॥१३०॥

छद्धि०— अच्छ स्फटिक-भल्लूक-निर्मलेष्वच्छमव्ययम् ।
आभिमुख्येऽप कच्छ स्यात् मठच्छ पापरत मत ॥१३१॥

[जिनम्]— जगत्कारा सरस्वत्यां पिशाच्यां जवनेऽपि च ।

[नट्टि०]— भना द्गौ द्ग काम पिपी छाग रथो सुते ॥१३२॥

---

१ अत्रै तु त्वनघर्थ इति पाठ ।

२ चैत्र क: 'कम्' इति शब्दप्रोत्सेवार्थ स्तत । अत्र तु ककमप्यपाठत ।

३ कत: वर्ग प्रथमस्य वर्ग लघम ।

व्रजो गोष्ठा-ऽध्व-वृन्देषु निजमात्मीय-नित्ययो ।
ध्वजं चिह्ने पताकायां ध्वजः सौण्डिक-सेफयो ॥१३३॥

द्विजो विप्रेऽण्डजे दन्ते वाजो निस्वन-पक्षयो ।
वाजं जले मुनौ वाजो व्याजः शाठ्या-ऽपदेशयो ॥१३४॥

अब्जो धन्वन्तरौ चन्द्रे निचुले शङ्ख-पद्मयो. ।
आजिः समावनौ युद्धे राजिः स्यात् पङ्क्ति-रेखयो' ॥१३५॥

गञ्जा खनौ सुरागेहे सञ्जः प्रजापतौ हरे ।
[जत्रि०]— करजस्तु करञ्जे स्याज्जलजं शङ्ख-पद्मयो ॥१३६॥

वनजो मुस्तके पद्मे काम्बोजो वारणे मत ।
[जच०]— जघन्यजोऽनुजे शूद्रे भारद्वाजो मुनौ स्मृत ॥१३७॥

द्विजराजः शशधरे सौपर्ण्येऽनन्तभोगिनि ।
धर्मराजो यमे प्रोक्तो धर्मराजो युधिष्ठिरे ॥१३८॥

नरराजः कुबेरेऽपि सार्वभू(भौ)मे सुधाकरे ।
भृङ्गराजस्तु मधुपे ग्रहराजो रवौ विधौ ॥१३९॥

[झद्वि०]— झञ्झा ध्वनिविशेषेऽपि झञ्झा स्याज्जलवर्षणे ।

[ज्ञैकम्] — ज्ञो विरिञ्चे तथा बुद्धे(धे)

ज्ञद्वि०— प्रज्ञा बुद्धौ तु पण्डिते ॥१४०॥

संज्ञा नामनि गायत्र्यां चेतनायां रविस्त्रियाम् ।
[ज्ञत्रि०]— सर्वज्ञस्तीर्थपे बुद्धे शङ्करे परिकीर्तित ॥१४१॥

दैवज्ञो गणकेऽपि स्यात् कृतज्ञः कुक्कुरेऽपि च ।
टद्वि०— कटः श्रोणौ क्रियाकारे किल(लि)ञ्जेऽतिशये शवे ॥१४२॥

समये गजगण्डे च पटः पियालपादपे ।
लटः प्रमाद-वचनदोषयोरप्युदाहृत ॥१४३॥

स्फुटो व्यक्ते प्रफुल्ले च कूट यन्त्रेऽनृते गिरौ ।
वाटो वृतौ च मार्गे च वाटी तु गृहनिष्कुटे ॥१४४॥

पटु पटोलपत्रेऽपि पट्टी ललाटभूषणे ।
रिष्टं क्षेम-शुभाभाव-कृपाणेषु निगद्यते ॥१४५॥

व्युष्टं दिने प्रभाते च फले पर्युषितेऽपि च ।
[टत्रि०]— अवट स्यात् त्रिषु गर्ते कूपे कुहकजीविनि ॥१४६॥

करटो गजगण्डे स्यात् पिच्चटो नेत्ररोगके ।
कुक्कुटस्ताम्रचूडे स्यात् कुक्कुभेऽग्निकणेऽपि च ॥१४७॥

कर्कटः करणे वीणा राशिभेद-कुलीरयो ।
परीष्टिः परिचर्यायां प्राकाम्येऽपि गवेषणे ॥१४८॥

मर्कटस्तूर्णनाभेऽपि कपौ स्त्रीकरणेऽपि च ।
[टच०]— भुविकूट प्राग्वशोदे प्रायश्चित्त-सुनाशयो ॥१४९॥

स्याद् गाढमुष्टिः कृपाणे कृपणादिषु चेष्यते ।
ठद्वि०— कठः स्वरे ऋचा भेदे कुण्ठोऽकर्मण्य-मूर्खयो ॥१५०॥

कुष्ठं रोगे सुगन्धे च गोष्ठं गोस्थानके मतम् ।
ज्येष्ठं श्रेष्ठेऽतिवृद्धे च ज्येष्ठो मासान्तरेऽपि च ॥१५१॥

[ठत्रि०]— कमठ कच्छपे भाण्डभेदे च कमठं मतम् ।
कनिष्ठाऽल्पेऽनुजे यूनि कनिष्ठा दुर्बलाङ्गुली ॥१५२॥

ठच०— दन्तशठ स्याज्जम्बीरे कपित्थे कर्मरङ्गके ।
हारकण्ठ परभृते हारान्वितगलेऽपि च ॥१५३॥

कालकण्ठस्तु दात्यूहे कलविङ्के च खञ्जने ।

[इति] ठान्तवर्गः ।

डद्वि:— गुड स्याद् गोलके हस्तिसन्नाहेक्षुविकारयो ॥१५४॥

जडो मूर्खे हिमग्रस्ते ताडस्ताडन-भाण्डयो ।
गण्ड कपोले पिटके योगभेदे च गण्डक ॥१५५॥

दण्डो यमे मानभेदे लगुडे दम-सैन्ययो ।
भाण्डं भूषणमात्रेऽपि भाण्डं मूलवणिग्धने ॥१५६॥

डत्रि०— **गारुडं** स्यान्मरकते विषशास्त्रेऽपि **गारुडम्** ।
**त्रारुण्डः** सेकपात्रे स्यान्मले दृक्कर्णयोरपि ॥१५७॥

डच०— **जलरुण्डो** जलावर्त्ते पयोरेणौ भुजङ्गमे ।
ढद्वि०— **दृढः** स्थूले भृशे शक्ते प्रगाढेऽपि **दृढो** मत ॥१५८॥

ढत्रि० — **आषाढो** व्रतिना दण्डे मासे मलयपर्वते ।
बद्धमूले **विरूढः** स्यात् **त्रारूढः** शम्बलेऽपि च ॥१५९॥

णद्वि०— **कणो**ऽतिसूक्ष्मे धान्यांशे कृष्णा-जीरकयो **कणा** ।
**द्रोणी** काष्ठाम्बुवाहिन्यां गवां घासभुजि स्थितौ ॥१६०॥

**जीर्णं** पक्के पुराणे च **दीर्णं** दारित-भीतयो ।
**कृष्णा** च द्रौपदी नीली हारहूरा च कथ्यते ॥१६१॥

णत्रि०— **अरुणो**ऽव्यक्तरागे स्यात् सध्यारागेऽर्कसारथौ ।
**त्ररुण**स्तरुणभेदेऽप्सु प्रतीचीपति-सूर्ययो ॥१६२॥

**प्रघण**स्ताम्रपर्णे('पात्रे')[1] स्यादलिन्दे लोहमुद्गरे ।
**लक्षणं** नाम्नि चिह्ने च सौमित्रौ चापि **लक्षणः** ॥१६३॥

**लक्ष्मणं** लाञ्छने प्रोक्तं रामभ्रातरि **लक्ष्मणः** ।
**करेणु**र्गज-हस्तिन्यो कर्णिकारेऽपि च क्वचित् ॥१६४॥

णच०— **आतर्पणं** च सौहित्ये गले **निगरणो** मत ।
**पारायण**मभीष्टे स्यात् तत्पराश्रययोरपि ॥१६५॥

**पुष्करिणी** सरोजिन्या हस्तिन्या च जलाशये ।
णप०— **अवतारणं** भूतादिग्रहे वस्त्राञ्चलेऽर्चने ॥१६६॥

निन्दोपालम्भवचने **परिभाषण**मिष्यते ।
णषट्— **दोहदलक्षणं** गर्भे वय सन्धौ च दृश्यते ॥१६७॥

तद्वि०— **इतं** गते स्याद् विज्ञाते **रत** सुरत-गुह्ययो ।
**वित्त** ख्याते धने लब्धे **त्रित्तं** ज्ञाते विचारिते ॥१६८॥

**चितिः** समूहे चित्याया **दितिः** स्यात् खण्डने दनौ ।
तत्रि० — **अमृतं** यज्ञशेषे स्यात् पीयूषे सलिले घृते ॥१६९॥

---

१ 'ताम्रकुम्भे' इति मेदिनीकोश ।

राशित कुङ्कुमे रक्ते गाशीर्षे च कुचन्दने ।
उदात्तः स्वरभेदे स्यात् कन्याकङ्कार-दक्षयो ॥१७०॥

वासिता करिणी-नार्योर्वासित सुरभीकृते ।
तच०– अवदातं सिते पिते विशुद्धे प्रवरेऽपि च ॥१७१॥

नागदन्ता द्विपरदे गृहान्निर्गतदारुणि ।
सप०– गणाधिपतिरित्याख्या शङ्करेऽपि गजानने ॥१७२॥

तपद्– अर्धपारावतश्चित्रकण्ठे तित्तिरपक्षिणि ।
यद्वि० – रथ स्यात् स्यन्दने काय पीयोऽर्के पीयमम्भसि ॥१७३॥

अर्थः प्रकार विषये न्यस्त(? प्रभ्य)-कारण-वस्तुषु ।
॥। अभिधेये च शब्दानां तथा चापि प्रयोजने ॥१७४॥

थत्रि०– मन्मथः कामचिन्तायां कपित्थ कुसुमायुध ।
क्षपणु कथित काये निर्ग्रन्थो जिनदर्शने ॥१७५॥

थच०– चित्ररथ स्यात गन्धर्व रवौ विद्याधरान्तर ।
चतुष्पथ चतुमर्गे सङ्गमेऽपि द्विजेऽपि च ॥१७६॥

। दद्वि०– गदो भ्रातरि विष्णो स्यादामये चायुधे गदा ।
अब्द सवत्सरे मेघे गिरिभेदे च मुस्तके ॥१७७॥

दत्रि०– चलद्रो दावरि श्रीदे जम्भद्रो मुग्तकेऽम्बुदे ।
अङ्गदः कपिभेदे स्यात् केयूरेऽङ्गदमिष्यते ॥१७८॥

अ। कुमुदः पुण्डरीकाख्ये रत्नभेदेऽपि पारदे ।
दच०– अपवादस्तु निन्दायामाज्ञा-विश्रम्भयोरपि ॥१७९॥

मेघनादस्तु वरुणे रावणस्य सुतेऽपि च ।
दप०– महस्रपाद कारण्ड मार्तण्ड यज्ञपुरुष ॥१८०॥

धद्वि०– राधो वैशाखमास स्यात राधा गोप्यां च विद्युत ।
ऊ बुध कथो रौह(हि)णेय नक्षत्र-मध्यी ॥१८१॥

वृद्धा जिम च क्षौर च सौम्ये च परिकीर्तित ।
धद्व०– विबुध पण्डित देव निपथ कठिन नृप ॥१८२॥

धच०— अवरोधस्तिरोधाने शुद्धान्ते राजवेश्मनि ।
अनुवन्धः प्रकृत्यादेर्दोषोत्पादेऽविनश्वरे ॥१८३॥

नद्वि०— इनः सूर्ये नृपे पत्यौ धनं गोधन-वित्तयो ।
घनः सान्द्रे दृढे दार्ढ्ये विस्तारे लोहमुद्गरे ॥१८४॥

जिनः स्यादतिवृद्धे तु बुद्धे चार्हति जित्वरे ।
दानं गजमदे त्यागे पालन-च्छेद-शुद्धिषु ॥१८५॥

मानं प्रमाणे प्रस्थादौ मानश्चित्तोन्नतौ गृहे ।
स्वप्नः सुप्तस्य विज्ञाने स्वप्नः स्वापे च दर्शने ॥१८६॥

हनुः प्रहरणे मृत्यौ कपोलावयवे गदे ।
नत्रि०— अवनं रक्षणे प्रीतौ भवनं भाव-वेश्मयो ॥१८७॥

दशनं कवचे दन्ते दशनं(नः) शिखरेऽपि च ।
शासनं राजदत्तोर्व्यां शास्त्राज्ञा-लेख-शास्तिषु ॥१८८॥

मिथुनं राज( [१] युग्म )भेदे स्याद् राशिभेदेऽपि पुं मतम् ।
सन्तानः सन्ततौ गोत्रे स्यादपत्ये सुरद्रुमे ॥१८९॥

योजनं तु चतुःक्रोश्या योगे च परमात्मनि ।
उदुम्बरे च पुन्नागे हरिद्राया तु काञ्चनी ॥१९०॥

काञ्चनं हेम्नि किञ्जल्के कुहनं काचभाजने ।
उपाये मृतसंस्कारे दापनेऽपगमे धने[१] ॥१९१॥

प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि ।
नच०— महाधनं महामूल्ये सुवर्णे सिल्हकेऽपि च ॥१९२॥

उपधान विशेषे च गण्डके प्रणयेऽपि च ।
कुम्भयोनिरगस्त्ये स्यादर्जुनस्य गुरावपि ॥१९३॥

आत्मयोनिर्विधौ कामे चित्रभानुः खगेऽनले ।
नप०— मधुसूदनसञ्ज्ञा च भ्रमरे वनमालिनि ॥१९४॥

पद्वि०— रूपं स्वभावे सौन्दर्ये नान(ण)के पशु-भेदयो ।
पत्रि०— कुतपः स्यात् कुशे वाद्ये तपने छागकम्बले ॥१९५॥

---

१ एतेऽर्था **साधन** इति शब्दस्य, तस्मात् '**साधनं** मृतसंस्कारे' इति पठ्यम् ।

रोहित कुङ्कुमे रक्ते गोशीर्षे च कुचन्दने ।
उदात्तः स्वरभेदे स्यात् कन्यालङ्कार-दययो ॥१७०॥

वासिता करिणी-नार्योर्वासितं सुरभीकृते ।
तव०— अवदातं सिते पीते विशुद्धे प्रवरेऽपि च ॥१७१॥

नागदन्तो द्विपरदे गृहान्निर्गतदारुणि ।
तप०— गणाधिपतिरित्याख्या शङ्करेऽपि गजानने ॥१७२॥

तपद्— अर्धपारावतश्चित्रकण्ठे तित्तिरपक्षिणि ।
थद्वि० — रथः स्यात् स्यन्दने काये पीथोऽर्के पीथमम्भसि ॥१७३॥

अर्थं प्रकार विषये व्यस्त(? द्रव्य)-कारण-वस्तुषु ।
अभिधेये च शब्दानां तृतौ चापि प्रयोजने ॥१७४॥

थभि०— मन्मथ कामचिन्तायां कपित्थे कुसुमायुधे ।
क्षपथुः कथित कासे निर्ग्रन्थो जिनदर्शने ॥१७५॥

थच०— चित्ररथ स्याद् गन्धर्वे रवौ विद्याधरान्तरे ।
चतुष्पथः चतुर्मार्गे सङ्गमेऽपि द्विजेऽपि च ॥१७६॥

दद्वि०— गदो भ्रातरि विष्णो स्यादामये चायुधे गदा ।
अब्द संवत्सर मेघे गिरिभेदे च मुस्तके ॥१७७॥

दभि०— चन्द्रो दातरि धीरे अब्दा मुस्तकेऽम्बुदे ।
अङ्गद कपिभेदे स्यात् केयूरेऽङ्गदमिष्यते ॥१७८॥

कुमुदः पुण्डरीकाक्षे रत्नभेदेऽपि पारदे ।
दच०— अपवादस्तु निन्दायामाज्ञा-विश्रम्भयोरपि ॥१७९॥

मेघनादस्तु वरुणे रावणस्य सुतेऽपि च ।
दप०— सहस्रपाद कारण्ड मार्तण्डे यज्ञपुरुषे ॥१८०॥

धद्वि०— राधा वैशाखमास स्याद् राधा गोप्यां च विद्युत ।
वृष कवौ गेह(हि)नय नदमुन्दत-मत्ययो ॥१८१॥

पृष्ठा जिम न कोरे च मौम्ये च परिकीर्तित ।
षद्०— विबुधः पण्डित देव निपधः कठिन नृपे ॥१८२॥

धच०— **अवरोध**स्तिरोधाने शुद्धान्ते राजवेश्मनि ।
**अनुबन्धः** प्रकृत्यादेर्दोषोत्पादेऽविनश्वरे ॥१८३॥

नद्वि०— **इनः** सूर्ये नृपे पत्यौ **धनं** गोधन-वित्तयो. ।
**धनः** सान्द्रे दृढे दार्ढ्ये विस्तारे लोहमुद्गरे ॥१८४॥

**जिनः** स्यादतिवृद्धे तु बुद्धे चार्हति जित्वरे ।
**दानं** गजमदे त्यागे पालन-च्छेद-शुद्धिषु ॥१८५॥

**मानं** प्रमाणे प्रस्थादौ **मान**श्चित्तोन्नतौ गृहे ।
**स्वप्नः** सुप्तस्य विज्ञाने **स्वप्नः** स्वापे च दर्शने ॥१८६॥

**हनुः** प्रहरणे मृत्यौ कपोलावयवे गदे ।
नत्रि०— **अवनं** रक्षणे प्रीतौ **भवनं** भाव-वेश्मयो ॥१८७॥

**दशनं** कवचे दन्ते **दशनं(नः)** शिखरेऽपि च ।
**शासनं** राजदत्तोर्व्यां शास्त्राज्ञा-लेख-शास्तिषु ॥१८८॥

**मिथुनं** राज( ? युग्म )भेदे स्याद् राशिभेदेऽपि पुं मतम् ।
**सन्तानः** सन्ततौ गोत्रे स्यादपत्ये सुरद्रुमे ॥१८९॥

**योजनं** तु चतुक्रोश्यां योगे च परमात्मनि ।
उदुम्बरे च पुन्नागे हरिद्रायां तु **काञ्चनी** ॥१९०॥

**काञ्चनं** हेम्नि किञ्जल्के **कुहनं** काचभाजने ।
उपाये मृतसंस्कारे दापनेऽपगमे धने[1] ॥१९१॥

**प्रधानं** स्यान्महामात्रे प्रकृतौ परमात्मनि ।
नच०— **महाधनं** महामूल्ये सुवर्णे सिल्हकेऽपि च ॥१९२॥

**उपधान** विशेषे च गण्डके प्रणयेऽपि च ।
**कुम्भयोनि**रगस्त्ये स्यादर्जुनस्य गुरावपि ॥१९३॥

**आत्मयोनि**र्विधौ कामे **चित्रभानुः** खगेऽनले ।
नप०— **मधुसूदन**सञ्ज्ञा च भ्रमरे वनमालिनि ॥१९४॥

पद्वि०— **रूपं** स्वभावे सौन्दर्ये नान(ण)के पशु-भेदयो ।
पत्रि०— **कुतपः** स्यात् कुशे वाद्ये तपने छागकम्बले ॥१९५॥

---

१ एतेऽर्था **साधन** इति शब्दस्य, तस्मात् '**साधनं** मृतसस्कारे' इति पठ्यम् ।

कुतपा भागिनेये स्यादष्टमांशे दिनस्य च ।
पक्ष०— प्राप्तरूपो बुधे रम्ये प्रतिरूप सुरूपवत् ॥१९६॥

फद्वि०— रेफा रवर्णे कथिता कुत्सितेऽवाच्यवत् पुन ।
बद्वि०— कम्बुः शम्बूक-गजयोर्नीचो(च)ऽनल्क-शङ्खयो ॥१९७॥

बत्रि०— कदम्बमाहु सिद्धार्थे नीपे च निकुरम्बके ।
गन्धर्वा दैत्यभेदे स्याद गन्धर्वौ मृग-देवयो ॥१९८॥

भच०— शतपर्वा च दूर्वाया भार्गवस्य स्त्रियामपि ।
मद्वि० — रम्भा कदल्यप्सरसो रम्भो वैणवदण्डके ॥१९९॥

सभा सामाजिके द्यूते गोष्ठी-मन्दिरयोरपि ।
मत्रि०— सुरभिश्चम्पके स्वर्णे जातीफल-वसन्तयो ॥२००॥

मद्वि०— दमस्तु दमये दण्ड कर्मे दमनेऽपि च ।
रमा रम्भा[1] रम कान्त रक्ताशोकद्रुमे स्मरे ॥२०१॥

लक्ष्मी श्रीरिव सम्पत्ति पद्म-शोभा प्रियङ्गुपु ।
मत्रि०— मध्यम स्याद स्वर मध्ये मध्यदेश तु मध्यज ॥२०२॥

मच०— पराक्रमा विक्रमे स्याद् सामर्थ्योद्योगयोरपि ।
यद्वि०— जया जयन्त विजय जया दुर्गाऽग्निमन्थयो ॥२०३॥

पद्यं श्लोक सुतौ पद्या पद्य शद्रे निगद्यते ।
यत्रि०— विजयस्तु जये पार्थ गौर्यां तु विजया तिथौ ॥२०४॥

यच० — मर्दनुनया द्वेष पश्चात्तापानुमन्थयो ।
रौह(हि)णेया भवेद वत्से मर्कतमण बुधे ॥२०५॥

यप०— कामानुगाय कामये शैलये शिशपाद्रुमे ।
रद्वि०— अरं शीघ्र च चक्राङ्गे [ऽरं पुर प्रथमेऽधिके] ॥२०६॥

करा वर्णोपल पाणौ शुण्डा प्रत्यय-रश्मिषु ।
पुरं पुरि शरीरे च गुग्गुलौ कथित पुरः ॥२०७॥

१ क्वचित्तु 'रमा कान्ते रमा लक्ष्म्यां' इति पाठः ।
२ क्वचित्तु 'विक्रमेऽपि स्यात्' इति पाठः ।

**पा(प)त्र** स्याद् वाहने पर्णे पक्षे च शरपक्षिणाम् ।
**चक्रो** गणे चक्रवाके **चक्रं** सैन्य-रथाङ्गयोः ॥२०८॥

**गिरिर्गिरियके** गीर्णा[1] क्रीडागु(गे)ण्ड(ण्डु)क-शैलयोः ।
रत्रि०— अमरस्त्रिदशेऽप्यस्थिसंहारे कुलिशद्रुमे ॥२०९॥

**शम्बरं** सलिले चित्रे बौद्ध-व्रतविशेषयोः ।
**विदुरो** नागरे धीरे कौरवाणां च मन्त्रिणि ॥२१०॥

**मथु(धु)रा** शतपुष्पाया **बन्धुरा** पु(प)ण्ययोषिति ।
**कुञ्जरोऽ**नेकपे केशे धातु(त)क्यामपि **कुञ्जरा** ॥२११॥

**पुष्करं** पङ्कजे व्योम्नि पय-करिकराग्रयोः ।
**विहारो** भ्रमणे स्कन्धे लीलाया सुगतालये ॥२१२॥

**करीरः** कलशे वृक्षभेदे वशाङ्कुरेऽपि च ।
रच०— भवेत् **परिकरो** व्राते पर्यङ्क-परिवारयोः ॥२१३॥

**दिगम्बरः** स्यात् क्षपणे नग्ने तमसि शङ्करे ।
**वलभद्रो** रो(रौ)हिणेयो **वलभद्रा** कुमारिका ॥२१४॥

रप०— **पांशुचामर** इत्येष दूर्वाञ्चिततटीभुवि ।
**पीतकावेरमि**च्छन्ति कुङ्कुमे पित्तलेऽपि च ॥२१५॥

लद्वि०— **वलं** गन्धरसे रूपे स्थामनि[2] स्थौल्य-सैन्ययोः ।
**वलो** हलायुधे दैत्यभेदे बलिनि वायसे[3] ॥२१६॥

**मलं** किट्टे पुरीषे च पापे च कृपणे मत ।
**स्थालं** भाजनभेदेऽपि **स्थाली** स्यात् पाटलोखयोः ॥२१७॥

**वालः** कचे शिशौ मूर्खे ह्रीवेरेऽश्वेभपुच्छयोः ।
**शूलं** प्रहरणे मृत्यौ केतने रोग-योगयोः ॥२१८॥

---

१ प्रतौ तु 'गिरि गीर्णौ गिरियके' इति पाठ ।
२ प्रतौ तु 'स्थाम्नि' इति पाठ ।
३ प्रतौ तु 'बलिनि वासयो' इति पाठ ।

**पा(प)त्र** स्याद् वाहने पर्णे पक्षे च शरपक्षिणाम् ।
**चक्रो** गणे चक्रवाके **चक्रं** सैन्य-रथाङ्गयोः ॥२०८॥

**गिरिर्गिरियके** गीर्णौ[1] क्रीडागु(गे)ण्ड(ण्डु)क-शैलयोः ।
रत्रि०— **अमरस्त्रिदशे**ऽप्यस्थिसंहारे कुलिशद्रुमे ॥२०९॥

**शम्बरं** सलिले चित्रे बौद्ध-व्रतविशेषयोः ।
**विदुरो** नागरे धीरे कौरवाणां च मन्त्रिणि ॥२१०॥

**मथु(धु)रा** शतपुष्पायां **बन्धुरा** पु(प)ण्ययोषिति ।
**कुञ्जरो**ऽनेकपे केशे धातु(त)क्यामपि **कुञ्जरा** ॥२११॥

**पुष्करं** पङ्कजे व्योम्नि पयः-करिकराग्रयोः ।
**विहारो** भ्रमणे स्कन्धे लीलायां सुगतालये ॥२१२॥

**करीरः** कलशे वृक्षभेदे वंशाङ्कुरेऽपि च ।
रच०— भवेत् **परिकरो** व्राते पर्यङ्क-परिवारयोः ॥२१३॥

**दिगम्बरः** स्यात् क्षपणे नग्ने तमसि शङ्करे ।
**बलभद्रो** रो(रौ)हिणेयो **बलभद्रा** कुमारिका ॥२१४॥

रप०— **पांशुचामर** इत्येष दूर्वाञ्चिततटीभुवि ।
**पीतकावेरमि**च्छन्ति कुङ्कुमे पित्तलेऽपि च ॥२१५॥

लद्वि०— **बलं** गन्धरसे रूपे स्थामनि[2] स्थौल्य-सैन्ययोः ।
**बलो** हलायुधे दैत्यभेदे बलिनि वायसे[3] ॥२१६॥

**मलं** किट्टे पुरीषे च पापे च कृपणे मत ।
**स्थालं** भाजनभेदेऽपि **स्थाली** स्यात् पाटलोखयोः ॥२१७॥

**बालः** कचे शिशौ मूर्खे ह्रीबेरेऽश्वेभपुच्छयोः ।
**शूलं** प्रहरणे मृत्यौ केतने रोग-योगयोः ॥२१८॥

---

१ प्रतौ तु 'गिरि गीर्णौ गिरियके' इति पाठ ।
२ प्रतौ तु 'स्थाम्नि' इति पाठ ।
३ प्रतौ तु 'बलिनि वासयो ' इति पाठ ।

लोला जिह्वा-कमल्योः कम्रि कस्तूरशूरयोः ।
लभि०— तरलं चञ्चले पिङ्गे हारमध्यमणावपि ॥२१९॥

बहुला कृष्णपक्षेऽग्नौ सितौ च बहुला गवि ।
फेनिलः स्यादरिष्टेऽपि फेनिला बदरीफले ॥२२०॥

मच०— मदकलः स्यान्मत्तेभे मदेनाव्यक्तभाषि च ।
कुतूहलं कौतुके स्यात् प्रशस्तेऽपि कुतूहलम् ॥२२१॥

लप०— कपीटपालमित्यन्ति फेनिपात सगुरमो ।
यद्वि०— मतः संसार-सत्ता-ऽऽसि-धेय शङ्कर-जन्मसु ॥२२२॥

ध्रुवः कीले शिवे शङ्कौ वसौ योगे वटे मुनौ ।
यभि०— भमयो जम्बूके स्याज्जन्मभूमौ पराक्रमे ॥२२३॥

यच०— जीवञ्जीवश्चकोरे स्याद् द्रुम-पक्ष(क्षि)विशेषयोः ।
यप०— म(आ)श्रितम्भवसमभावे तृप्तौ चाप्याश्रितम्भव ॥२२४॥

शद्वि०— यशमायशताया स्याद् यशमिच्छा-प्रमुत्वयोः ।
कुशो रामसुते दर्भे निशा रात्रि-हरिद्रयोः ॥२२५॥

षभि०— मास(सि)तः शाके मूर्खे लोमशो लोमसंयुते ।
उड्डीशो मन्त्रभेदे स्यादुड्डीशश्चन्द्रिकापतौ ॥२२६॥

षच०— अपदेशः स्मृतो लक्ष्ये(क्ष्ये) निमित्त-व्याजयोरपि ।
जीवितेशो यमे कान्ते जैवातृकौ भौमिताभिप ॥२२७॥

षद्वि०— वृष स्याद् वासके धर्मे सौरभेये च शुक्रले ।
दोषः स्याद् दूषणे पापे दोषा रात्रौ भुजेऽपि च ॥२२८॥

ऋषिर्वेदे वशिष्ठादौ दीधितावपि कथ्यते ।
उषा बाणसुता-राज्योरुष कामिनि गुग्गुले ॥२२९॥

षभि०— निकषः शाणफलके निकषा यातुमातरि ।
नहुषो राज्ञि भुजगे कल्पषं स्याद्विपश्चितो ॥२३०॥

षच०— अनिमिष सुरे मत्स्येऽप्यनुकर्षोऽनुकर्षणे ।
परिघोषो निनादे स्यादवाच्ये गलध्वनौ ॥२३१॥

सद्वि०— रसो गन्धरसे स्वादे तिक्तादौ विष-रागयोः ।
शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे ॥२३२॥

सत्रि०— अलसः पादरोगे स्यात् क्रियामन्दे द्रुमान्तरे ।
तमोऽन्धकारे स्वर्भानौ तमः शोके गुणान्तरे ॥२३३॥

सच०— भेदे घनरसः सान्द्रे निर्यासे मोरटेऽम्बु च ।
कर्पूरे पीलुपर्ण्यां च सम्यक् सिद्धरसेऽपि च ॥२३४॥

सप०— हिङ्गुनिर्यास इत्येष निम्बे हिङ्गुरसेऽपि च ।
हद्वि०— सहो बले सहा मुद्गपर्ण्यां तु नखसंपजे ॥२३५॥

सहदेवाकुमार्यां तु सहः क्षान्ते सहा भुवि ।
ग्रहो ग्रहेऽवहारे च नाहो बन्धन-कूटयोः ॥२३६॥

मोहमिच्छन्ति मूर्छायामविद्यायां च सूरयः ।
मही भूमौ मही नद्यां मह उत्सव-तेजसोः ॥२३७॥

कुहूः स्यात् कोकिलालाप नष्टेन्दुकला-दर्शयोः ।
हत्रि०— पटहस्तु समारम्भे आनके पटहं मतम् ॥२३८॥

कलहः खड्गकोशे स्याद् भण्डने युद्ध-राढयोः ।
वैदेही रोचना-सीता-वणिक्स्त्री-पिप्पलीष्वपि ॥२३९॥

हच०— अवग्रह इति स्यातो वृष्टिरोधे गजालिके ।
परिग्रहः परिजने पत्न्यां स्वीकार-मूलयोः ॥२४०॥

उपनाहो व्रणे लेपपिण्डे वीणानिबन्धने ।
हप०— प्रपितामह इत्येष विधौ पितृपितामहे ॥२४१॥

क्षद्वि०— अक्षः कर्षे तुषे चक्रे शकट-व्यवहारयोः ।
दक्षः पटौ हरवृषे ताम्रचूडे प्रजापतौ ॥२४२॥

क्षत्रि०— अध्यक्षोऽधिकृते प्रोक्तः प्रत्यक्षेऽध्यक्षमिष्यते ।
आरक्षं रक्षणार्थे स्यात् शीर्षे मर्मणि दन्तिनाम् ॥२४३॥

रक्ताक्षः कासर क्रूर पारावत-चकोरयो ।
क्षय० — राजहंस प्रियाए स्यात् विशालाक्षी वरस्त्रियाम् ॥२४४॥

अनेकार्थाम्बुधौ प्रौढ गुरौ विनयमन्दगात् ।
उमथ्य शब्दरत्नौघ उदधे कविभूषणम् ॥२४५॥

इत्याचार्यश्रीविनयचन्द्रविरचितायां कविशिक्षायां
विनयाङ्कायामनेकार्थ[ शब्दसंग्रहो ] नाम पञ्चम परिच्छेद ॥

# ६. रसभावनिरूपणपरिच्छेदः ।

[1]विभावानुभावव्यभिचारिभिरभिव्यक्तः स्थायी भावो रसः [ सू० १]

स्थायिव्यभिचारिलक्षणाश्चित्तवृत्तयो विभाव्यन्ते विशिष्टतया ज्ञायन्ते—यैस्तैर्विभावै काव्य-नाट्यशास्त्रप्रसिद्धैरालम्बनोद्दीपनस्वभावैर्ललनोद्यानादिभि, स्थायिव्यभिचारिलक्षण चित्तवृत्तिविशेष सामाजिकजनोऽनुभवन्ननुभाव्यते—साक्षात्कार्य[ते यै]स्तैरनुभावै कटाक्षभुजाक्षेपादिभि', विविधमाभिमुख्येन चरणशीलैर्व्यभिचारिभिर्धृति-स्मृतिप्रभृतिभि, स्थायिभावानुमापकत्वेन लोके कारण-कार्यसहचारिशब्दव्यपदेश्यै, ममैवैते परस्यैवैते न ममैते न परस्यैते—इति संबन्धिविशेषस्वीकारपरिहारनियमानवसायात् साधारण्येन प्रतीतैरभिव्यक्त' सामाजिकानां वासनारूपेण स्थित स्थायी इत्यादिको भावो नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात् सहृदयहृदयसवादभाजा साधारण्येन गोचरीक्रियमाणश्चर्व्यमाणतैकप्राणो विभावादिभावनावधिरलौकिकचमत्कारकारितया परब्रह्मास्वादसोदरोऽमिमीलितनयनै' कविसहृदयै रस्यमान स्वसवेदनसिद्धो रस' ।

स च न विभावादे कार्यस्तद्विनाशेऽपि रससभवप्रसङ्गात् । नापि ज्ञाप्य' सिद्धस्य तस्याभावात् । कारक-ज्ञापकाभ्यामन्यत् क दृष्टमिति चेन्न, क्वचिददृष्टमित्यलौकिकत्वसिद्धेर्भूषणमेतन्न दूषणम् । विभावादीनां च समस्तानामभिव्यञ्जकत्व न व्यस्तानाम्, व्यभिचारात् । व्याघ्रादयो हि विभावा भयानकस्येव वीराद्भुत-रौद्राणाम् । अश्रुपातादयोऽनुभावा करुणस्येव शृङ्गार-भयानकयो, चिन्तादयो व्यभिचारिण करुणस्येव शृङ्गार-वीर-भयानकानाम् ।

यत्राप्येकैकस्योपादानम्, यथा—

केलीकन्दलितस्य विभ्रममधोर्धुर्यं वपुस्ते दृशौ[2]
भङ्गीभङ्गुरकामकार्मुकमिद भ्रूनर्मकर्मक्रम ।
आपातेऽपि विकारकारणमहो वक्त्राम्बुजन्मासव
सत्यं सुन्दरि ! वेधसस्त्रिजगतीसारं तवैवाकृति ॥१॥

[अभिनवगुप्तलोचने अभिनवभारत्या च । ]

---

१ **काव्यानुशासन**स्य द्वितीयाध्यायादुद्धृतोऽय परिच्छेद ।

२ 'दृशोर्भङ्गी' इति पठ्यम् ।

